ॐ

# सविवरणम् श्रीरामायणभारतसार संग्रहस्तोत्रद्वयम्

श्रीमदद्वैतविद्याचार्य श्रीमदप्पय
दीक्षितकृतं
श्रीमत्परमहंसपरिव्राजक श्रीब्रह्मानन्द
तीर्थकृत
टिप्पणीसमेतम्

## निग्रहाष्टकञ्च

इंडियन्यन्त्रालये स्वीये प्रयागक्षेत्रसंस्थिते
श्रीचिन्तामणिघोषेण मुद्रयित्वा प्रकाशितम्

विक्रमार्कात्संवत् १९५१ शके १८१४ फाल्गुन



मूल्यं ।।।)

# प्रसिद्धार्थबोधकपत्रम् ।

ॐ इह खलु श्रुतिस्मृतीतिहासपुराणादिषु परशिवस्य परब्रह्मत्वं सुप्रसिद्धम् । स्कान्देतु, "मायाबलेनैवहरिं शिवेन समानमाहुः पुरुषाधमाश्च । मोहेन केचिन्मम साम्यमाहुर्मायातुशैवीखलुदुस्तरेयम् ॥ खद्योतो यदि चण्डभानुसदृशस्तुल्योहरिः शम्भुना, किम्पाको यदि चन्दनेन सदृशस्तुल्योहमीशेनच ॥ अज्ञानं यदि वेदनेन सदृशं देवेन तुल्या जनाः, किं वक्ष्ये सुरपुंगवा अहमहो मोहस्य दुश्चेष्टितमित्यादिसूतसंहितान्तर्गतब्रह्मगीतास्थब्रह्मवाक्यैर्विष्ण्वादीनांशिवसाम्यत्वकथनमपि माया मोहकृतमिति स्पष्टीकृतम्, तच्च श्रीनीलकण्ठाचार्यैर्ब्रह्म सूत्राणि शिवपरतया व्याख्याय दृढीकृतं, ततः श्रीभारद्वाजकुलकलशजलधिराकासुधाकरैः पदवाक्यप्रमाण पारावारगाम्भीर्य्यकूलंकषविमर्शपरिवृढैः शिवपारम्य प्रतिपादकशिवतत्वविवेकशिवकर्णामृतादिनिजप्रबंध निरन्तरविचारजनितशिवतत्वनिर्णयनिरवशेषनिस्सारितचिरन्तनमलत्रयनिर्मलहृदयमुकुरप्रतिभाननिरूढ - शिवात्मभावनासिद्धवैदिकशैवजनपरमाचार्यैरुभयनिगमान्ताचार्यैश्चतुरधिकशतप्रबन्धनिर्वाहकैः सर्वतंत्रस्वतंत्रैर्विश्वजिद्वाजिश्रीरंगराजयायजूकशिखामणिभागधेयैर्महाव्रतयाजिभिःश्रीशिवावतारैःश्रीमदप्पयदीक्षितैः श्रीनीलकण्ठभाष्यरत्नाकरनिगूढतत्वार्थरत्नावलीसमुत्तेजननिकषोपलन्यायमालाभरितशिवार्कमणिदीपि काप्र

ग्रन्थनिर्म्माणेन रामानुजभाष्यं सम्यगाभासीकृत्य तदेव श्रुत्यादिप्रसिद्धं परशिवस्य परब्रह्मत्वं स्थूणानिघननन्यायेन पुनर्दृढ़ीकृतम्, येषांतु पुनः परशिवस्य परब्रह्मत्वमसहमानानामयमभिमानः महामुनिप्रणीतरामायणभारतादिषु विष्णोरेव परब्रह्मत्वं प्रतिपादितं न शिवस्येति, तेषां दुरहंकारदुरभिमानदुर्बुद्धिविध्वंसनाय तत्रापि तस्यैव परशिवस्य परब्रह्मत्वं प्रतिपादितमिति प्रख्यापनाय च तैरेवोक्तविशेषणविशिष्टैः श्रीमदप्पयदीक्षितैर्लीलान्यायेन निर्मितं व्यंग्यार्थसंप्रदायरहस्यनिधानब्रह्मर्षिवर्य श्रीवाल्मीकिकृष्णद्वैपायनमहामुनिवदनारविन्दनिस्सृत श्रीमद्रामायणादिकाव्यभारतेतिहासरत्नतत्वार्थसारशिवतत्वप्रकाशकं रामायणसारसंग्रहभारतसारसंग्रहाख्यं सविवरणं स्तोत्रद्वयं, तच्च तैलङ्गाक्षरस्थं मया दक्षिणदेशादानीयश्रीविद्वच्छिरोमणिभूतेभ्यो जम्बूराज्यनिवासिभ्यः श्रीगंगाधरशास्त्रिभ्यो नागराक्षरैर्विलेखनाय दत्तं, ततस्तैः परहितैकतानतया तथैव विलिख्य दत्तञ्च मह्यम्, ततस्तदिदं स्तोत्रद्वयं स्वकीयस्वल्पटिप्पण्यासंयोज्यपरोपकाराय संस्करणार्थं परहितैकपरायण मनीषयैव प्रतिष्ठापितेण्डियन्यंत्रालयाधीशाय श्रीचिन्तामणिघोषवर्मणे प्रयागक्षेत्रनिवासिने दत्तम्, तेनच निजद्रव्यव्ययेन निजेण्डियन्यंत्रालये परहितायाऽङ्कयित्वाप्रकाशितमितिशिवम् ॥

स्वामी ब्रह्मानन्दतीर्थः, दाक्षिणात्यः ॥

ॐ

# श्रीरामायणसारसंग्रह स्तोत्रविवरणम् ॥

ॐ श्रीगणेशायनमः ॥

इह खलु भगवान् प्राचेतसः कमलासनवरलब्ध-सकलार्थवेदनः श्रीरामचन्द्रचरितवर्णनात्मकं श्रीरामायणाख्यंमहदादिकाव्यं निर्ममे तन्निर्मिमाणश्च तत्र तत्र निबद्धैः श्रीरामचन्द्रवचनैस्तच्चरितकाव्यान्तरवचनैः स्ववचनैश्च सकलदेवतातिशायिनं शिवस्यमहिमातिशयं व्यञ्जयामासेत्येतदर्थप्रतिपादकं शिवस्तोत्रमारभमाणस्तत्प्रतिपाद्यमर्थं तावत्प्रतिजानीते वाल्मीकिरिति:—

वाल्मीकि रादिकविरा ऽखिलार्थदर्शी ।
साक्षा द्विरिञ्च इव संप्रतिपन्नभावः ।
वि[1]ऽवेशाविष्णु मधिकृत्य कृते प्र[2]बन्धे ।

१ श्रीरामचन्द्र मुद्दिश्य । २ रामायणाख्ये ग्रन्थे ॥

व्यक्त्या त्वैव[1] निबबन्ध परंपरत्वम्[2] ॥ १ ॥

व्यक्त्या, व्यञ्जनाख्यया ध्वनिवृत्त्या ॥ १ ॥ तत्र ताव दगस्त्याश्रमप्रवेशसमये श्रीरामचन्द्रवचनैः कविवचनैश्च शिवमहिमातिशयद्योतन माविष्करोति रामायण इतिः—

रामायणे हि कलशप्रभवाश्रमस्था ।
देवादयोपि तम्[3]उ पासत इत्युदीर्य्य ।
स्थानानि चात्र[4] मधुजिन्म घव न्मुखानां ।
तस्याश्रमे[5] निगदितानि न ते कपर्द्दिन्॥२॥

अगस्त्याश्रमाभ्याशे लक्ष्मणंप्रति श्रीरामचन्द्रवचनानि "अत्रदेवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । अगस्त्यं नियताहारं सततं पर्य्युपासते ॥ अत्र देवाश्च यक्षाश्च नागाश्च पतगैःसह । वसन्ति नियताहारा धर्म माराधयिष्णवः" इति ॥ अगस्त्याश्रमप्रवेशानन्तरं कविवचनानि[6] "स तत्र ब्रह्मणःस्थान मग्नेःस्थानं तथैव च । विष्णोः स्थानं तथेन्द्रस्य स्थान ञ्चैव विवस्वतः ॥ सोमस्थानं भगस्थानं स्थानं कौवेर मेवच ।

१ हे शम्भो तवैव । २ निरतिशयोत्कर्षत्वम् । ३ अगस्त्यम् । ४ रामायणे । ५ अगस्त्यस्याश्रमे । ६ वाल्मीकिवचनानि ॥

धातुर्विधातुः स्थाने च वायोः स्थानं तथैव च ॥ स्थानञ्च पाशहस्तस्य वरुणस्य महात्मनः । स्थानं तथैव गायत्र्या वसूनां स्थान मेव च ॥ स्थान ञ्च नागराजस्य ह्यनन्तस्य महात्मनः । कार्त्तिकेयस्य च स्थानं धर्म्मस्थान ञ्च पश्यतीति" ॥ एवं देवोपास्यत्ववचनानां स्थानवर्णनवचनाना ञ्च वक्तृभेदेपि काव्यप्रबंद्धु रेकत्वा दुद्दोर्येति निर्देशः । अत्र ब्रह्मादीना मगस्त्य मुपासितु मागतानां स्थाना न्युक्तानि तथैव प्रागुपक्रान्तत्वात् । उत्तररामायणे शंबुकवधानन्तरं श्रीरामचन्द्रं द्रष्टुं स्वर्गा द्विमानै रागतानाम् "अगस्त्यस्याश्रमपदं द्रक्ष्याम" स्तं महाशय मित्यादिकं वचनजात मुपन्यस्य तथैव तदभिवादनार्थं तेषा मगस्त्याश्रमगमनोक्त्या तत्रैव श्वेतनामानं राजानं क्षुत्पिपासारूपं महाव्याधे रवधिं पृष्टवन्तं प्रति अगस्त्यदर्शनेन "स हि तारयितुं शक्तः सौम्यः सुरगणानपि । किं पुन स्त्वां महाबाहो क्षुत्पिपासासमन्वित मिति" वचनोपन्यासेन च अगस्त्यस्य सकलदेवतोपास्यतायाः स्फुटीकरणा च्च । अगस्त्यस्योपासनार्थं तदाश्रमे निवसतां ब्रह्मादिदेवाना मिव तत्र शिवस्य स्थानं नोक्तम् तस्मात् ब्रह्मविष्ण्वादय एवागस्त्योपासका नतु शिव इति द्योतनेन शिवस्य तदतिशायी महिमा व्यञ्जितः ॥ २ ॥

न केवल मेतावता किन्तु प्रकारान्तरेणापि व्यञ्जित इत्याह तेनेति :—

तेन[1] त्वमेव ननु सिध्यसि पारिशेष्यात् ।
तस्येन्दुशेखर[2] ! तपोनिकरै रुपास्यः ।
तस्या[3] प्युपासकतया विनिवेशितेभ्य ।
स्तेभ्य[4] स्तव त्वतितरां महिमा प्रसिध्येत् ॥३॥

शिवं विना सकलै देवै रुपास्यमानस्यागस्त्यस्य तपोनिकरै राराधनीयः शिव एवेति पारिशेष्यात् सिद्धयति। ततश्च इतर देवानां शिवोपासकत्वसिद्धेस्तेभ्यः शिवस्यातितरा मुत्कर्षः प्रसिद्धयती त्यर्थः ॥ ३ ॥

किञ्च लवणवधार्थं शत्रुघ्नं प्रेषयता श्रीरामचन्द्रेण तद्वधार्थं हरिमूर्त्तिरूपं किंचिदस्त्रं दत्वा तत्प्रभावो वर्णितः "नायं मया शरः पूर्वं रावणस्य वधार्थिना। मुक्तः शत्रुघ्न ! भूतानां महाँ स्त्रासो भविष्यतीति" ॥ तथैव शत्रुघ्नेन क्रियमाणे तस्य शरस्य सन्धाने सकलभूतत्रासकृत्वा त्त्रासेन समागतान् देवान् प्रति ब्रह्मणो वचनेनापि तस्य शरस्य महामहिमा प्रपंचितः "एषोहि पूर्व-

१ शिवेतरविष्णवादिसकलदेवाना मगस्त्योपासकत्वप्रदर्शनहेतुना । २ अगस्त्यस्य । ३ अगस्त्यस्यापि । ४ विष्णवादिदेवेभ्यः ॥

देवस्य लोककर्त्तुः सनातनः । शरस्तेजोमयो ह्येषः येन वो भय मागतम् ॥ एष वै कैटभस्यार्थे मधुनश्च महाशरः । सृष्टो महात्मना तेन वधार्थं दैत्ययो स्तयोः ॥ एव मेव प्रजानीध्वं विष्णोस्तेजोमयं शरं । एषा चैव तनुः पूर्वं विष्णो स्तस्य महात्मनः" इति ॥ एवं भूतं शरं प्रयच्छतापि श्रीरामचन्द्रेण यदा शिवेन स्वशूला द्विनिष्कृष्य दत्तं शूलं लवणस्य हस्ते स्थितं तदा येन केना प्युपायेन स जेतुं न शक्य इति हस्ते शूलाभावसमये सन्निरुद्ध्य अनेन शरेण हन्तव्य इति उपदिश्य तदुपपादनार्थ मुक्तम् "श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रम" मिति ॥ अनेनापि शिवस्य निरतिशयोत्कर्षसिद्धि माह अत्यन्तेति:—

अत्यन्तपूज्यविषयं किल यत्प्रसिद्धम् ।
श्रीमद्विशेषण मिदं[1] हरिमूर्तिरूपात् ।
अस्त्रा त्त्वदा[2]प्त मधिकं किमपित्रिशूलम् ।
व्यक्तं त्वयाऽ वनै[3]! परत्र निवेशितं तत् ॥४॥

वैष्णवमूर्त्तिरूपेणा प्यस्त्रेण हरदत्त शूलाभावसमयं प्रतीक्ष्य हन्तव्य इति वचनेन तदुपपादनार्थेन शिवा-

---

१ श्रीमतःशितिकण्ठस्येति । २ त्वत्सकाशा ल्लवणासुरेण प्राप्तम् । ३ हेरक्षक ॥

ज्ञाया दुरतिक्रमत्ववचनेन च शिवस्य निरतिशयमहिमा स्पष्ट एव, श्रीमद्विशेषणेनापि तदभिव्यक्तिरुच्यते अत्र हीदं विशेषणं श्रीमाँ ञ्क्रतुनिबर्हणः षडर्द्धनयनः श्रीमानित्यादा विव कान्त्यतिशयादिवर्णनया नान्यथा सिद्धम् ततो दुरतिक्रमत्वोपपादनासिद्धेः किन्त्वत्यन्तपूज्यविषयम् इत्थम्भूत मिदं विशेषणां शिव इव नान्यत्र प्रयुक्तमिति तेनापि तस्य निरतिशयोत्कर्षसिद्धिः ॥ ४ ॥

कुम्भोद्भवस्य सुरै[1]सं सदुपास्यता च ।
श्रीमद्विशेषण मिदञ्च तवेन्दुमौले !
श्रीरामचन्द्रवचनेष्विति तन्नि[2]बन्ध ।
[3]स्तस्यापि भक्ति मधिकां भवति व्यनक्ति॥५॥

अथ श्रीरामचन्द्रवचनान्तरेणापि तस्य शिवे भक्त्यतिशयव्यक्तिं दर्शयति यस्यास्तिहीति :—

[4]यस्यास्ति हिस्म शि[5]बिरं शिव[6]दक्षिणाग्रे ।
कुक्षि[7]गते जलनिधे र्नलसेतु कॢप्त्यै ।

---

१ देवतासमुदायैस्सेव्यता । २ तस्य रामचन्द्रस्य प्रतिपादको रामायणाख्यो ग्रन्थः । ३ रामचन्द्रस्यापि । ४ रामचन्द्रस्य । ५ सेनानिवेशस्थानम् । ६ रामेश्वरदक्षिणभागे । ७ मैनाके ॥

तस्मिन् जगद्विदित भूमनि सेतुबन्धे ।
पूर्वं प्रसन्न इति च त्वयि भक्ति मूचे ॥६ ॥

प्रतिप्रयाण समये सीतां प्रति श्रीरामचन्द्रवचनानि "एत त्तु दृश्यते तीर्थं सागरस्य वरानने । यत्र सागर मुत्तीर्य्य तां रात्रि मुषिता वयम् ॥ एष सेतु र्मया बद्धः सागरे सलिलार्णवे । तव हेतो र्विशालाक्षि नल सेतुः सुदुष्करः ॥ पश्य सागर मक्षोभ्यं वैदेहि वरुणालयम् । अपार मभिगर्जन्तं शङ्खशुक्तिनिषेवितम् ॥ हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि । विश्रमार्थं हनुमतो भित्वा सागर मुत्थितम् ॥ एत त्कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् । एत त्तु दृश्यते तीर्थं सागरस्य महात्मनः ॥ सेतुबन्ध इति ख्यातं त्रैलोक्येना भिपूजितम् । एतत्पवित्र मतुलं महापातकनाशनम् ॥ अत्र पूर्वं महादेवः प्रसाद मकरो त्प्रभुः । अत्र राक्षसराजोय माजगाम विभीषण" इति । अत्राद्यश्लोकेन सागरतरणानन्तरं यत्र परपारे समुद्रजलावतारप्रदेशे सेनानिवेश आसीत्स प्रदेश उक्तः । तत स्त्रिभिः श्लोकैः स्वकारितो नलसेतुः सागरो मैनाकश्च प्रदर्शितः । तदनन्तर मर्द्धेन यत्र नलसेतु बन्धना-

१ रामचन्द्रे । २ शिवः प्रसन्नोऽभूत् । ३ इति हेतोः ॥

र्थं सेनानिवेश आसीत्स प्रदेश उक्तः । नच तेन मैनाक एव लंकावत्समुद्रमध्यगतदुर्गरूप उक्त इति शङ्कनीयम् समुद्रमध्ये निमज्य स्थितस्य तस्य प्राग् दुर्गत्वोक्त्ययोगात् अनन्तरमपि केनचित्तमेव दुर्गमाश्रित्य स्थीयत इति प्रसिद्ध्यभावात् दुर्गं कर्तुं शक्यमित्यर्थकल्पनस्य चातिक्लिष्टत्वात् "यत्र सागर मुत्तीर्य तां रात्रि मुषिता वय" मिति सागरोत्तरणानन्तरस्यैव तत्प्राचीनस्यापि स्कन्धावारनिवेशनस्यैव प्रदर्शने तत्स्वारस्या च्च एवञ्च तस्य समुद्रकुक्षिगतत्वोक्तिः सेतुबन्धाख्यवक्ष्यमाणसेतुदक्षिणाग्रप्रदेशत्वाभिप्रायेण योजनीया । अन्यथा समुद्रजलमध्ये याव न्नलसेतुबन्धनं पञ्चरात्रपर्य्यन्तं सेनानिवेशायोगात् । ततः सार्द्धश्लोकेन सेतुबंधाख्यः सकलजगत्पूजितः सकलमहापातकनिवर्तकश्च सेतुरुक्तः तस्य सेतो स्तथाभूतमहिमहेतु स्तत्र रामेण प्रतिष्ठापितस्य तथा वरं दत्तवतः शिवस्य प्रसादस्तदनन्तर मर्द्धेनोक्त स्तेनार्द्धेन संक्षिप्त श्चार्थः कूर्मपुराणे नारायणोपाख्याने रावणवधानन्तरं प्रतिप्रयाणवृत्तान्तकथने विवृतः । "सेतुमध्ये महादेव मीशानं कृत्तिवाससं । सामिसोमलसत्फालं स्थापयामास राघवः॥ तस्य देवो महादेवः पार्वत्या सह शंकरः। प्रत्यक्ष एव भगवा न्दत्तवा न्वर मुत्तमम् ॥ यत्त्व

या स्थापितं लिङ्गं द्रक्ष्यन्ति मनुजर्षभाः । महापातकनिर्मुक्ता स्ते यान्ति परमां गतिम् ॥ अन्यानि चैव पापानि स्नातस्यात्र महोदधौ । दर्शनादेव लिंगस्य नाशं यान्ति न संशयः ॥ यावत्स्थास्यन्ति गिरयो यावदेव च मेदिनी । यावत्सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥ स्नानं दानं तपः श्राद्धं भविष्यत्यक्षयं फलम् । स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति" इति वाल्मीकीयं वर्त्तमानश्वेतवराहकल्पावतारवृत्तान्तप्रतिपादकमिति तत्प्राचीनलक्ष्मीकल्पवृत्तान्तप्रतिपादककूर्मपुराणवर्णितस्यार्थस्य अत्र पूर्वमित्यनुवादो युक्त एव । अत्र पूर्वं प्रसन्नः शिवइत्युक्त्या शिवे रामचन्द्रस्य अनादिसिद्धो भक्त्यतिशय आविष्कृतः । एवञ्च सेतुबन्धाख्यः सेतुः पूर्वं यत्र प्रसन्नः शिवः तत्र तस्य दिव्यमन्दिरनिर्माणार्थं तत्सेवायै समागच्छतां गमनागमनसौकर्य्यार्थं नवटङ्कभेदविनिर्मितचतुरस्राकारैः पाषाणैरेव निर्मितः नलसेतौ तत्संज्ञाभेदात् पूर्वमारभ्य ख्यातत्वपूजितत्ववचनात्त्रैव पूर्वं शिवस्य प्रसन्नत्ववचनाच्च शिवालयनिर्माणार्थं समुद्रकुक्षौ किंचिद्दूरं प्रविष्टो नलसेतोरन्यः प्राक् सिद्धः सेतु रुक्त इति प्रतिभाति । नलसेतुर्हि न नवटङ्कच्छिन्नाभि र्नापि केवलं शिलाभिः कृतः किन्तु तरुगुल्मलतादिसहितै र्गिरिशिखरै र्गण्डपाषाणै

श्च। उक्तं हि तत्रैव "ततो विसृष्टा रामेण सर्वतो हरि-
यूथपाः । अभिपेतु र्महारण्यं हृष्टाः शतसहस्रशः ॥ ते
नगा न्नगसंकाशाः शाखामृगगणर्षभाः । बभंजु र्वान-
रास्तत्र प्रचकर्षुश्च सागरम् ॥ ते सालैः साश्वकर्णै
श्च तथा वंशैश्च वानराः । कुटजै रर्जुनैस्तालै स्ति-
लकै स्तिमिशैरपि ॥ बिल्वकैः सप्तपर्णैश्च कर्णिकारै
श्च पुष्पितैः । मुक्तै श्चाशोकवृक्षैश्च सागरं समपूर-
यन् ॥ पुष्पिताग्रा न्समूलाँश्च पादपान् हरिसत्तमाः।
इन्द्रकेतूनिवोद्यम्य प्रजह्रु र्हरयस्तरून् ॥ सालान् दाडि-
मवृक्षाँश्च नारिकेला न्विभीतकान् । वकुला न्ककुभा
न्निम्बा न्समाजह्रु रितस्ततः ॥ मेघाभैः पर्वताग्रैश्च तृणैः
काष्ठै र्बबन्धिरे । पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति
वानरा" इति ॥ एवं पादपादिसहितैः पाषाणैः कृतः सेतु
स्तात्कालिकसंचारमात्रोपयोगी न चिरं सिन्धो रुपरि
स्थायीति नलसेतुतः सेतुबन्धोन्य इति स्फुटम्प्रति-
भातीति विमर्शनीयं विद्वद्भिः । ननुकूर्मपुराणे सेतोः स्था-
यित्वं दर्शितम् तथा स्कान्दे नागरखण्डेपि तत्र हि
"यदि कश्चित्समायाति मनुष्योऽत्र कथंचन । मत्का-
रणा न्न हन्तव्यः सर्वैरेव निशाचरैः ॥ तथा निशाचरा
स्सर्वे त्वया वार्य्या विभीषण। मम सेतुं समुल्लंघ्य न ग-
न्तव्यं धरातल" इतिश्रीरामचन्द्रवचनम्। "भविष्यन्ति

कलौ काले दरिद्रा नृप मानवाः । तत्र स्वर्णस्य लोभेन देवतादर्शनाय च ॥ नित्यञ्चैवा गमिष्यन्ति त्यक्त्वा रक्षः कृतं भयम् । तेषां यदि वधं कश्चिद्राक्षसः प्रापयिष्यति ॥ भविष्यति च मे दोषः प्रभुद्रोहोद्भवः प्रभो। तस्मात्किञ्चिदुपायन्त्वञ्चिन्तयस्व यथा मम ॥ आज्ञाभंगकृतं पापं जायते न सुरोत्तम" इति विभीषणस्य प्रतिवचनं प्रदर्श्य "तस्य तद्वचनं श्रुत्वा ततः स रघुसत्तमः। बाढमित्येव चोक्त्वाथ चापं सज्जीचकार सः॥ ततस्तं कीर्त्तिरूपञ्च मध्यदेशे रघूत्तमः । अच्छिनत्सुशितै र्बाणै र्दशयोजनविस्तृतम्" ॥ इति मनुष्याणांद्रव्यलोभा ल्लङ्कापर्य्यन्तगमनं माभूदित्येतदर्थं रघुनाथेनैव मध्यभागे सेतुच्छेदः कृत इति वर्णितम् । सत्यम्, कूर्मपुराणोक्तं तावत्कल्पान्तरवृत्तान्तविषय मित्युक्तम् । नागरखण्डोक्तमपि कल्पान्तरवृत्तान्तविषयमेव। तत्र हि वैकुण्ठयात्रार्थं समाह्वानाय देवदूतागमनानन्तरं स्वयं वैकुण्ठयात्रां करिष्यता श्रीरामचन्द्रेण पुष्पक मारुह्य किष्किन्धामार्गेण सुग्रीवेण सह लङ्कां गत्वा तत्र दशरात्रिमुषित्वा प्रतिनिवृत्तिसमये सेतोरादिमध्यान्तेषु रामेश्वराख्यं लिंगत्रयंप्रतिष्ठाप्य तत्र विभीषणायेयं बुद्धिरुपदिष्टेति वर्णितम् । अतः कथाभेदा त्तदपि कल्पान्तरवृत्तान्तविषयमेव। कल्पान्तरसेतु

यावत्प्रलयस्थायीति पुनः प्रवृत्ते कल्पे सेत्वन्तरनिर्माणमुपपद्यते । शिवमन्दिरनिर्माणार्थं किञ्चिद्दूरं कृतः सेतुबन्धस्तु शिवाज्ञया कल्पान्तरेपि तिष्ठतीत्येतदुपपद्यत इति न कश्चिद्वाविरोधः । "अबद्धपूर्व मितरैर्बध्वासेतुं महोदधौ । कृतोवानरकोटीभिः समुत्तीर्य महार्णवम्" इतिभारतवचने सेतो रितरैः पूर्वमबद्धत्वोक्तिस्तु पूर्वमपि रघुनाथेनैव कृतो नत्वितरैरित्येतदभिप्रायेणोपपद्यते । अध्यात्मरामायणकृता तु "सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम् । संस्थाप्य पूजयामास रामो लोकहिताय च ॥ प्रणमेत्सेतुबन्धं यो दृष्ट्वा रामेश्वरं शिवम् । ब्रह्महत्यादिपापेभ्यो मुच्यते तदनुग्रहात्" इति नलसेत्वारम्भसमये रामेश्वरप्रतिष्ठा वर्णिता । प्रतिप्रयाणसमये च "एष सेतुर्मया बद्धः सागरे सलिलार्णवे । एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः ॥ सेतुबन्ध इति ख्यातं त्रैलोक्येन च पूजितम् । एतत्पवित्रं परमं दर्शनात्पातकापहम् ॥ अत्र रामेश्वरो देवो मया शम्भुः प्रतिष्ठितः" इति सीतां प्रति श्रीरामचन्द्रोक्तिवर्णनेन च तद्दृढीकृतम् । तदित्थं पुराणान्तरं दृष्ट्वा वर्णितम् । सेतुबन्ध इति ख्यातं त्रैलोक्येनाभि पूजितमित्यादिवाल्मीकीयरामायणवचनसन्दर्भाभिप्रायमित्थमुन्नीय

वर्णितंवेति न विद्मः । उदाहृतवाल्मीकीयरामायण-
वचनसन्दर्भस्यापि नलसेतुनिर्माणारम्भसमये रामे-
श्वरप्रतिष्ठा कृतेत्यभिप्रायकल्पने सेतुबन्धनिर्माणपू-
र्वकं तत्ररामेश्वरं प्रतिष्ठाप्य सेतुबन्धरामेश्वरदर्शने
महाफलत्त्वञ्च श्रीरामचन्द्रेण नियतमिति ततः प्रभृति
महापातकनाशनमिदन्तीर्थं त्रैलोक्येनाभिपूजितम्, इह
रामेश्वरश्च रावणवधसिध्यर्थं प्रसन्नोभूदित्येतदर्थतया
स्वारस्यं भजत एव । अस्मिन्पक्षे रामेश्वरदिव्यम-
न्दिरपर्य्यन्तं सेवार्थिनां गतागतसौकर्याय टङ्कच्छिन्न-
पाषाणैः स्थायिनं सेतुबन्धं निर्माय स तदग्रे स्कन्धा-
वारं निवेश्य ततः प्रभृति तात्कालिकस्वसेनागता-
गतोपयुक्तं सेतुं तरुगुल्मादिसहितैश्शैलशिखरादिभि
र्नलेन कारयामासेति योजनीयम् । वाल्मीकीये हि
रामायणे प्राचीनवृत्तान्तस्य पश्चादुद्घाटनमन्यत्रापि
दृश्यते यथा काकवृत्तान्तस्य यथा वा रावणगृहो-
षितसीतार्थपायसप्रेषणवृत्तान्तस्य यथा वा अन्धमु-
निकृतदशरथशापवृत्तान्तस्य एवं सेतुबन्धनिर्माण-
वृत्तान्तस्यापि भविष्यतीति न काचिदनुपपत्तिः । सेतु-
बन्धसाधारण्येन नलसेतुत्वव्यवहारस्तु पश्चादुभयो
रेकीकरणान्नलसेतुभागभूम्नोपपद्यते ॥ ६ ॥

श्रीरामचन्द्रचरितविशेषैस्तस्य शिवे भक्त्यतिशयाभिव्यक्तिमाविष्कर्तुं तानेव चरितविशेषान् श्लोकत्रयेण निबध्नाति श्रान्तस्सुदीर्घेत्यादिना—

श्रान्तः सुदीर्घसमरेण[1] रघुप्रवीरः[2] ।
चिन्ताकुलः कलशयोनिकृतोपदेशः[3] ।
ब्रह्माच्युतत्रिणयनेश भवत्स्वरूपम्[4] ।
स्तोत्रेण[5] यद्रिपुजयाय रविं प्रपन्नः ॥७॥
रक्षोधिपो[6] निहत एव दिवं प्रयाहि ।
कार्यं[7] कृतं खलु न[8] इत्युदिते[9] विधात्रा[10] ।
राज्यस्थितः कुरु तुरङ्गममेधयज्ञम्[11] ।
इत्युक्तिमेव जगृहे तव यत्र शम्भो! ॥८॥
इक्ष्वाकु वंश भवराज्य पदे निविष्ट ।
त्वामेव यत्र सुचिरं हयमेधकॢप्त्या ।
ईजे कथान्तरगिरा शिव ते न चक्री[12] ।
यष्टव्य इत्यवरजस्य[13] निरस्य भावम् ॥९॥

---

१ बहुकालयुद्धेन । २ रामचंद्रः । ३ अगस्त्येन कृतः आदित्यहृदयोपदेशो यस्य । ४ त्रिमूर्त्यधिपतिशिवशरीररूपम् । ५ आदित्यहृदयाख्येन । ६ रावणः । ७ दुःखनिवृत्तरूपं कार्यम् । ८ अस्माकं ब्रह्मादिदेवानाम् । ९ इत्थमुक्ते सत्यपि । १० ब्रह्मणा । ११ अश्वमेधयज्ञम् । १२ विष्णुः । १३ लक्ष्मणस्य ॥

रावणयुद्धसमये "ततो युद्धपरिश्रान्तं समरे चिन्तयास्थितम् । रावणञ्चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपगम्याब्रवीद्रामगस्त्यो भगवानृषिः" ॥ इत्युपक्रम्याऽगस्त्यकृतादित्यहृदयोपदेशं प्रदर्श्य श्रीरामचन्द्रस्तदुपदिष्टादित्यहृदयस्तोत्रं जप्त्वा तद्विश्वासेन चिन्तां विहाय हर्षेण रावणवधोद्युक्त आसीदिति प्रपञ्चितम् । आदित्यहृदयञ्च शिवविषयम् । "ब्रह्मेशानाच्युतेशाय सूर्य्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नम" इत्यादित्यस्य त्रिमूर्त्यधिपतित्वमुक्त्वा तदुपपादनाय रौद्राय वपुष इति स्तोत्रस्यादित्यान्तर्य्यामि शिवपर्य्यन्तत्वाविष्करणात् । "नमो हिरण्यबाहवे हिरण्यपतयेम्बिकापतय उमापतये नमो नमः ॥ असौयस्ताम्रो अरुण उतबभ्रुः सुमङ्गलः ॥ नमोहमायन् महाऽ यमोहमायेत्यादित्योपासनार्थवैदिकमन्त्रभागाना मादित्यान्तर्य्यामि शिवपर्यन्तत्वदर्शनेन वेदोपबृंहणार्थे रामायणे पठितस्यादित्यहृदयस्यापि तत्पर्यन्तत्वावश्यंभावाच्च । रावणवधानन्तर मग्निप्रवेशितां सीतां ग्राहयितुं समागतेषु देवेषु ब्रह्मणा प्रतिपादितम् " तदिदंनःकृतं कार्यं त्वया धर्मभृतांवर । निहतोरावणोराम प्रहृष्टो दिवमाक्रम" इति तदनन्तरंशिवेन

तु । "प्राप्य राज्यमयोध्यायां सान्त्वयित्वा सुहृज्जनम् । इक्ष्वाकूणां कुले राज्यं स्थापयित्वा महाबल ॥ इष्ट्वा तुरगमेधेन प्राप्यचानुत्तमं यशः । ब्राह्मणेभ्योधनं दत्वा त्रिदिवं गन्तुमर्हसि" इत्युक्तम् ॥ तत्र ब्रह्मवचनमनादृत्य शिववचनमेवाङ्गीकृतं । तदङ्गीकृत्यायोध्यां प्राप्य राज्यं परिपालयता च शिवोपदेशं मनसि निधायाश्वमेधः कृतः । अश्वमेधेन शिव एवाराधितः । कथमिदं ज्ञायते शिव एवाराधित इति ॥ अश्वमेधोद्योगसमये प्रागश्वमेधेन विष्णु राराधित इति प्राचीन कथोपन्यासेन लक्ष्मणस्य चिकीर्षितेनाश्वमेधेन विष्णु राराधनीय इति भावं विदित्वा तेन शिव आराधित इति रघुनाथः कथान्तरोपन्यासेन "नान्यं पश्यामि भैषज्य मन्तरेण वृषध्वजम् । नाश्वमेधात्परो यज्ञः प्रियश्चैव महात्मन" इति कथान्तर्गतवचनोपन्यासेन च स्वयमश्वमेधेन च शिव आराधनीय इति स्वाशयमाविश्चकार । तथैव ऋत्विग्भिरपि शिवप्रीत्यर्थमेवाश्वमेधः कारित इत्येतत् । "ते तु रामवचः श्रुत्वा नमस्कृत्य वृषध्वजम् । अश्वमेधं द्विजाः सर्वे पूजयन्तिस्म नित्यश" इतिश्लोकेन व्यञ्जितम् । अतः श्रीरामचन्द्रः शिवमेवाराधितवानिति ज्ञायते ॥ ९॥

एतैश्चरितविशेषैः श्रीरामचन्द्रस्य शिवे दृढाभक्ति

राविष्कृतेत्युक्तिपूर्वकं कवेरपि शिवस्य महिमातिशये तात्पर्यं तदीयवचनार्थलिङ्गेन दर्शयति एतैरिति ॥

एतैस्त्वयि प्रकटिता रघुनन्दनस्य ।
भक्तिः स्थिरा परतरत्वमतिश्च नित्या ।
सुव्यक्तमादि कविना स्वयमात्मनश्च ।
रुद्रस्स विष्णुरिवचेत्युपमोक्ति भंग्या ॥१०॥

कृताभिषेकः स रराज रामः सीताद्वितीयः सह लक्ष्मणेन । कृताभिषेको गिरिराजपुत्र्या रुद्रःसविष्णुर्भगवानिवेश इत्युपमानिबन्धनेन कविरपि स्वयं शिवः सर्वातिशायिमहिमाशालीति स्वतात्पर्यमाविश्चकारेत्यर्थः ॥ १० ॥ अथ कवेः शिव एव सर्वजगन्नियन्तेत्यत्र तात्पर्यं हेतुभिराविष्कर्तुं तत्तावत्प्रतिजानीते संवत्सरमिति ॥

संवत्सरं वरद वासयितुं प्रवृत्तः ।
सीतान्दशाननगृहे जगतांनियन्तुः ।
संकल्प एव तव तद्वसते रबोधे ।
रामस्य हेतुरिति भावममुष्य मन्ये ॥११॥

---

१ पूर्वोक्त हेतुभिः । २ वाल्मीकिना । ३ शिवस्य ।
४ रावणनिलयाऽज्ञाने । ५ वाल्मीकेः ॥

सीतारामयोर्विप्रयोगं संवत्सरमनुवर्त्तयिषोरीश्वरस्य सङ्कल्प एव रामस्य रावणवसत्यबोधे हेतुर्वाल्मीकेराशयस्थित इत्येतत्कुतो ज्ञायत इत्याशंक्य, अवश्य जिज्ञासितं रावणनिलयमेव रघुनाथेन सादरं पृष्टैस्तज्ज्ञानद्भिरत्याप्तैरपि जटायुकबन्धसुग्रीवैरनुक्तत्वात् रामस्य तन्निलयावबोधे संवत्सरविप्रयोगाऽनिर्वाहाच्चेति श्लोकद्वयेनाह सीतेत्यादिना ॥

सीतापहार मवलोक्य रघूत्तमाय ।
ब्रूयुर्नजात्विति मुनिर्विदितत्वदाज्ञः ।
पृष्टोयदस्य रघुचन्द्रमसा निवास ।
मुक्त्वागतः खगपतिः कियदन्यदन्यत्॥ १२॥

संसूच्यवक्ष्य इति नाह कबन्ध एत ।
दज्ञानमभ्यनय दत्र च सूर्यसूनुः ।
उक्तं हि तत्र भगवन्ननिमित्त मन्य ।
त्संकल्प एव भवतः शिव तस्य दृष्टिः॥ १३॥

ज्ञाते रिपुं रघुपति लघु संजिहीर्षे ।
यः क्रोधतः समजिहीर्षदशेषलोकान्।

१ रावणस्य। २ रामचन्द्रेण। ३ जटायुः। ४ वाद्ये इति सूचनं कृत्वा। ५ रावणनिलयं। ६ रामचन्द्रप्रश्नविषये। ७ सुग्रीवः॥

मोघो भवेच्छिव तदा निहते रिपौ ते ।
संकल्प एव सहते तु तदीयबाणः ॥ १४ ॥

जटायुसमागमे तावदेवं प्रश्नोत्तरे । जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः ॥ सीतामाख्याहि भद्रन्ते वधमाख्याहि चात्मनः । किं निमित्तं हरेत्सीतां रावणस्तस्य किं मया ॥ अपराद्धन्तु यद्दृष्ट्वा रावणेन हृता प्रिया। कथन्तच्चन्द्रसंकाशं मुखमासी न्मनोहरम् । सीतया कानि चोक्तानि तस्मिन्काले द्विजोत्तम। कथं वीर्य्यः कथं रूपः किं कर्मा स च राक्षसः । क्व चास्य भवनन्तात ब्रूहि मे परिपृच्छतः। तमुदीक्ष्याथ दीनात्मा विलपन्तमनाथवत् ॥ वाचातिसन्नयारामं जटायुरिदमब्रवीत् । सा हृता राक्षसेन्द्रेण रावणेन विहायसा। मायामास्थाय विपुलां वातदुर्द्दिनसंकुलाम् । परिश्रान्तस्य मे तात पक्षौ च्छित्वा च राक्षसः। सीतामादाय वैदेहीं प्रयातो दक्षिणां दिशम् । उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव। पश्यामि वृक्षान्सौवर्णानुशीरकृतमूर्द्धजान्॥ येनयातिमुहूर्तेन सीतामादाय रावणः। विप्रणष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते। विन्दो नाम मुहूर्तोयं स च काकुत्स्थ नाबुधत्॥ झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ।

१ व्यर्थः । २ रामचन्द्रस्य बाणः ॥

न च त्वया व्यथा कार्या जनकस्य सुतां प्रति । वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे। असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः। आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् । पुत्रो विश्रवसःसाक्षाद्भ्राता वैश्रवणस्य च । इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः॥ ब्रूहिब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेरिति ॥ कबन्धसमागमे तु "रावणेन हृता भार्या ममसीता यशस्विनी। निष्क्रांतस्य जनस्थाना त्सहभ्रात्रा यथासुखम्। नाममात्रन्तु जानामि न रूपन्तस्य रक्षसः । निवासं वा प्रभावं वा वयं तस्य न विद्महे। शोकार्तानामनाथानामेवं विपरिधावताम्। कारुण्यञ्चेदृशं कर्तुमुपकारे च वर्तताम्। काष्ठान्यानीय शुष्काणि काले भग्नानि कुञ्जरैः। धक्ष्यामस्त्वां महाभाग श्वभ्रे महति कल्पिते। सत्वं सीतां समाचक्ष्व यत्र वा येन वा हृता। कुरु कल्याणमत्यर्थं यदि जानासि तत्वतः॥ इति प्रश्नः । तत्र कबन्धस्योत्तरम् "दिव्यमस्तिनमे ज्ञानं नहि जानामि मैथिलीम् । यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः । अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो । राक्षसं तंमहावीर्यं सीता येन हृता तव । विज्ञानं हि महद्भ्रष्टं शापदोषेण राघव । स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम्। किन्तु यावन्नयात्यस्तं सविता श्रान्तवाहनः।

तावन्मामवटे क्षिप्त्वा दह राम यथाविधि । दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन। वक्ष्यामि तं महावीर यस्तं ज्ञास्यति राक्षसं । तेन सख्यञ्च कर्त्तव्यं न्यायवृत्तेन राघव । कल्पयिष्यति ते वीर साहाय्यं लघुविक्रमः । न हि तस्यत्वविज्ञातं त्रिषुलोकेषु राघव। सर्वान्परिसृतो लोकान् पुरावैकारणान्तरे, इति ॥ ततो राक्षसदेहदाहानन्तरं शापमुक्तेन प्राचीनं स्वरूपमास्थाय विमानमधिरुह्य गतेन तेन "श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः ॥ इत्युपक्रम्य तस्य चरित्रमप्युपन्यस्य "स ते सहायो मित्रञ्चसीतायाः परिमार्गणे। भविष्यति हि ते राम माचशोके मनः कृथाः । भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा। कर्त्तुमिक्ष्वाकुशार्दूल कालो हि दुरतिक्रमः। गच्छशीघ्रमितोवीर सुग्रीवं त्वं महाबलं। वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव। इत्यादीनिचोक्त्वा "स हि स्थानानि सर्वाणि कात्स्न्येन कपिपुङ्गवः । न तस्य विदितं लोकेकिञ्चिदस्ति हि राघव। यावत्सूर्यः प्रतपति सहस्रांशुररिन्दम। इति प्रागुक्तार्थ एवाऽनूदितः। सुग्रीवसमागमेतु "क्व वा वसति तद्रक्षो महद्व्यसनदं मम। यन्निमित्तमहं सर्वान्मारयिष्यामि राक्षसान्। हरता मैथिलीं येन माञ्चरोषयता भृशम्। आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम्।इति प्रश्नः, ततः सुग्रीवस्य

प्रत्युत्तरम् "न जाने निलयं तस्य सर्वथा पापरक्षसः। सामर्थ्यं विक्रमं वापि दौष्कुलेयस्य वा कुलमिति। इह जटायुर्बाह्याभ्यन्तर चिन्हैः क्षणान्तरेऽपि स्वस्य जीवनानुवृत्तेर्दौर्लभ्यं संभावयन् व्याहरणशक्तिकाल एव रावणवधे त्वरितस्य श्रीरामचन्द्रस्य, प्रश्नविषयेषु, अवश्यजिज्ञासितरावणनिलयप्रश्नस्यैव प्रथममुत्तरं वक्तव्यमिति स्वयमेव ज्ञातुं शक्तोऽपि तद्वक्तुमिवोपक्रम्य तदपृष्टं दर्शनादिकमन्यदन्यदेवाह ॥ ततो विश्रान्ति समये "पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य चेत्ये-तावदेवोक्त्वा, इतः परं रावणनिलयवचनं प्राप्तकाल-मासीदिति चिन्तयत्यपि राघवे दिष्टं गतः॥ कबन्धोऽपि सीतां रावणनिलयं च पृष्टः प्राग्दिव्यरूपेण सञ्चार काले सकलदेवगन्धर्वादिप्रसिद्धं रावणं जानन् तद्विभा-वनाय विशेषतो नाभिजानामि मैथिलीमित्युक्त्वा रावणं तु जानामीति विभावयन् ॥ अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो॥ राक्षसं तं महावीर्यं सीता येन हृता तव ॥ विज्ञानं हि महद्भ्रष्टं शापदोषेण राघव" इत्युक्तिभंग्या दहनेन शापमोक्षं पूर्वविज्ञानं च प्राप्य तदनन्तरं रावणं तन्निलयञ्च वक्ष्यामीति सूचयित्वा पुनस्तदैव "वक्ष्यामि तं महावीर यस्तंज्ञास्यति राक्षस मिति स्वयं रावणंन वक्ष्यामि तज्ज्ञातारमन्यं वक्ष्यामीति

पूर्वसूचितार्थमुक्त्वा, सुग्रीवमेव तज्ज्ञातारं तेन यत्र क्वचिन्निवेशितायाः सीताया मार्गणे समर्थं च सामान्यतो विशेषतश्च प्रपञ्चेन जगाद ॥ सुग्रीवस्तु पृष्टः सर्वप्रकारेणापि रावणं तन्निलयं च जानन्नेव कथमपि न जानामीति ज्ञानमपललाप ॥ स जानातीत्येतच्च कबन्धवचनैः सुविदितमेव ॥ चतसृष्वपि दिक्षु मार्गितव्यान् पुरगिरिसागरादीनुपदिश्य, "अभास्करममर्यादन्न जानीमस्ततः परमिति तद्वचनेन च विदितम् उत्तररामायणे हि सुग्रीवस्य रावणतत्प्रभावतन्निलयादिदृढपरिज्ञानसद्भावः स्पष्टीकृतः ॥ तत्र हि, अगस्त्येन रघुनाथम्प्रति वालिना बलाद्गृहीत्वा किष्किन्धाभ्याशं नीतस्य रावणस्य वालिनासहाऽग्निसाक्षिकसख्यप्राप्तिमुक्त्वा ह्युक्तम् ॥ अन्योन्यलंबितकरौ ततस्तौ हरिराक्षसौ ॥ किष्किन्धां विशतो हृष्टौ सिंहौ गिरिगुहामिव ॥ स तत्र ह्युषितो मासं सुग्रीव इव राक्षसः ॥ अमात्यैरागतैर्नीतस्त्रिलोक्युत्सादनार्थिभिः ॥ एवमेतत्पुरा वृत्तं वालिना रावणः प्रभो । धर्षितश्च कृतश्चापि भ्राता पावकसन्निधौ" इति ॥ एवं युवराजः सुग्रीव इव वालिनो बहुमानपात्रतया माससमात्रं सहस्थितः, ततस्त्रैलोक्यविजयार्थममात्यैर्नीतश्च ॥ तस्य स्थानविक्रमादिकं सुग्रीवो न जानाती

त्येतदत्यन्ताऽसंभावितमेव ॥ तेन सर्वधा न जानामि किञ्चिज्ज्ञानामीत्यर्थ इति शंकापि निरस्ता ॥ अति सौहृदेन परिचये सर्वप्रकारेणापि ज्ञानस्याऽवश्यम्भावात् ॥ तदर्थकल्पनेपि यावज्जानाति तावतस्तदैव वक्तव्यत्वापत्तेश्च ॥ यत्तु हनुमदादीन् दक्षिणसमुद्रं प्रेषयता दक्षिणस्यां दिशि सीतान्वेषणाय तत्रत्यान्वेषणीयस्थानान्युपदिशता लङ्कामतीत्यस्थितं भोगवत्यादिकं वदतापि विशिष्यलङ्का नोक्ता तत्प्राक्कृतस्व ज्ञानापलापनिर्वाहाय, चतसृष्वपि दिक्षु सीतान्वेषणार्थमप्रसिद्धान्यपि स्थानान्युपन्यस्यन्, अति प्रसिद्धां लङ्कां न जानातीत्यत्यन्ताऽसंभावितमेतत् ॥ अतएव ह्युक्तापलापनिर्वाहाय वालिसामर्थ्यं रामेण पृष्टः सुग्रीवस्सर्वविधमपि वालिनः पराक्रमं प्रपंचेन वर्णयन्नपि वालिना गृहीत्वा किष्किन्धां नीत इत्यमुमंशंनोक्तवान् ॥ एवं सर्वात्मना स्वस्य रावणनिलयादिज्ञानं गूहमानोपि दक्षिणस्यां दिशि हनुमदादिप्रेषणसमये इदानीमपि गूहिते मित्रकार्यं न सिध्येदिति स्वज्ञानमाविश्चकार ॥ तत्र हि दक्षिणसमुद्रवर्णनानन्तरमुक्तं "द्वीपस्तस्य परे पारे शतयोजनविस्तृतः ॥ अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः ॥ तत्र सर्वात्मनासीता मार्गितव्या विशेषतः । स हि देशस्तु वध्यस्य रावणस्य

दुरात्मनः ॥ राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः । इति ॥ अत्र पूर्वं स्वज्ञानं गूहितमिति व्रीडया रावण वासस्य लङ्केति नाममात्रं नोक्तम् ॥ एवं च यद्गृध्र राजः स्वयं दशरथस्थानीयोपि प्रथमवक्तव्यं व्याहरण शक्तिकाले नावदत् ॥ यच्च कबन्धसुग्रीवौ कृतकरिष्य माणमहोपकारौ त न्नावदताम् ॥ तत्र दृष्टः कश्चन हेतुरस्तिचेत्कविनाऽवश्यमुच्येत, तदनुक्त्या तदभावं निश्चित्य परमेश्वरसंकल्प एव तत्र हेतुर्विवक्षित इति सहृदयाःस्वयमेव ज्ञास्यन्तीत्यभिप्रेत्य तेषामवचनमात्रं कविर्निबबन्धेति निश्चीयते ॥ न च तेषां रावणनिलया- दीनामधिगमेपि सेतुबन्धादिकार्येषु सहायान्वेषणार्थं कालविलम्बो भवेदिति तत एवान्यथासिद्धेः कथं तेषा मवचनं परमेश्वरसंकल्पैकायत्तं सहृदया निश्चिनुयु रिति शंकनीयम् ॥ एतच्छंकावारणार्थमेव कविना जन स्थाने सीतामन्वेषमाणस्य रामस्य तेन गन्धर्वादिषु सीतां केपि न प्रदर्शयन्ति न प्रयच्छन्ति चेति महता क्रोधेन कृत्स्नस्यापि त्रैलोक्यस्य खिलीकरणार्थं शर सन्धानपर्य्यन्तं व्यापारमुक्त्वा ततो लक्ष्मणकृतेन प्रसा- दनेन "एकस्य नापराधेन लोकान्हन्तुं त्वमर्हसीत्युक्त्या तस्य ततो निवृत्तिरुक्ता ॥ अनेनाऽऽकर्णितेन सहृदयाः श्रीरामो रावणवधे सहकार्य्यंतरं नेच्छेदित्यवगमादुक्त

शंकारहिताः सन्तस्तेषामवश्यमुनिवचनविरोधे परमेश्वरसंकल्पमेव हेतुं विवक्षितं ज्ञास्यन्तीति ॥ अनेन साक्षान्नारायणस्यैव लक्ष्मीविप्रयोगं चिरमनुवर्तयितुं कृतसंकल्पः परमेश्वरो नारायणादन्योऽभवत् ॥ पूर्वापर सन्दर्भेषु नारायणादप्यधिकमहिमेति व्यञ्जितः शिव एव विवक्ष्यत इति ज्ञास्यन्तीति कवेराशय इत्यर्थः ॥ ननु परमेश्वरः किमर्थं रावणगृहे सीतां संवत्सरं वासयितुं संकल्पयामासेति चेत्, उच्यते, महता तपसा युक्तस्तपोवीर्यभ्रंशं कारयित्वा रघुनाथमुखेन हन्तव्यः, तत्तपोवीर्यभ्रंशश्च चिरं तत्र सीता वासनेनैव लभ्यते, तद्वासे हि तस्यां निरन्तरं मोहितात्मा सर्वं तपस्त्यजेत्, तदानीं रघुनाथेन हन्तुं शक्यो भवति नान्यथेत्येतदभिप्रायेणैव भगवता वाल्मीकिना जटायु वधानन्तरं, "तां लतामिव वेष्टन्तीमालिङ्गन्तीं महाद्रुमान् ॥ मुञ्च मुञ्चेति बहुशः प्रवदन् राक्षसेश्वरः ॥ क्रोशन्तीं राम रामेति रामेण रहितां वने ॥ जीवितान्ताय केशेषु जग्राहान्तकसन्निभः । इति, रावणेन प्रसह्य सीतायाः केशग्रहणं कृतमित्युक्त्वा "दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा । कृतं कार्यमिति श्रीमान् व्याजहार पितामहः । इति, तदानीन्तनकेश ग्रहणानन्तरमेव रावणवधेन देवकार्य्यं सिद्धं ब्रह्मा

निस्त्रिकायेत्युक्तम् ॥ यदा प्रथमं पर्णशालायां केश ग्रहणादि कृतं तदा स निस्त्रिकायेति नोक्तम् ॥ तत्रापि केशग्रहणादिर्महान् मानभङ्ग उक्तः ॥ अभिगम्य प्रहृष्टात्मा राक्षसः काममोहितः । जग्राह रावणः सीतां ग्रहः खे रोहिणीमिव ॥ वामेन सीतां पद्माक्षीं मूर्द्धजेषु करेण सः ॥ ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना, इति ॥ तदानीं ब्रह्मणो देवकार्यसिद्धिनिश्चयमनुक्त्वा जटायुवधानन्तरं केशग्रहणं दृष्ट्वा तस्य तन्निश्चय मुक्तवन्तः कवेराशयः, यद्यप्याद्येन महता महिषीमान भङ्गेनैवातिक्रुद्धस्य रामचन्द्रस्य रावणजिघांसा भवेत् तथापि तपोबलसमन्वितस्य तस्य सीतायास्तद्गृहे वासनेनैव तपो नाशो भविष्यति "सीताञ्च तात रक्षिष्ये त्वयि याते स लक्ष्मण इति, यदि जटायुना रावणमार्गे वसता रावणं जित्वा सीता मोचिता स्यात् तदा रावणगृहे तन्निवासालाभात्सक्रुत्कृतेन महिषी मानभङ्गेन पुनरपि कदाचिन्निजसन्निधानाभावे मायया समागत्य सीतामपहरेदिति शंकया राघवस्य सर्वात्मना रावण वधार्थविजृम्भणसंभवेपि तपोबलसमन्विते तस्मिन् तद्विजृम्भणं न भवेदिति प्राग्ब्रह्मणस्तन्निश्चयो न जातः । जटायुप्रयुक्तविघ्ननिवृत्तौ जात इति ॥ एवं तपोबलसमन्वितो रावणस्तद्गृहे सीतावासनेन

तद्भ्रंशनं विना हन्तुं न शक्य इति स्कान्दे केदारखण्डे स्पष्टीकृतम् ॥ तत्रह्येवमुपाख्यायते, रावणेन निर्जिताः सर्वे देवास्तद्वधोपायं मन्त्रयामासुः, तदाभगवान्नारायणस्तदीयं स्वमूर्द्धोपहारपर्य्यन्तशिवाराधनरूपं तपःप्रभावं वर्णयित्वा भवद्भिस्ततोधिकं तपः कृत्वा स जेतव्य इत्युवाच, तेपि तथा भूतं तपः कर्तुमशक्नुवन्तः शिवं प्रसादयितुं शिवलोकं जग्मुः, तत्र शिवराजधानीपुरःस्थितेन नन्दिकेश्वरेण । क्व यूयं क्व शिवः शम्भुस्तपसा परमेण हि ॥ द्रष्टव्यो यदि मध्यस्थः सो द्य द्रष्टुं न पार्य्यते । यावद्भावा अनेकाश्च इन्द्रियार्थास्तथैव च ॥ यावच्च ममताभावस्तावदीशोपि दुर्लभ इति शिवदर्शननैराश्यं बोधिताः । ततो रावणवधोपायं नन्दिकेश्वरः स्वयमुवाच । अपहासपरं वाक्यं पौलस्त्यस्य श्रुतं यदा । तदा मया च शप्तोसौ रावणो लोकरावणः । ईदृशान्येव वक्त्राणि संभविष्यन्ति येषु वै ॥ तैः समेतो महान् कोपि नरवर्यो महातपाः ॥ मां पुरस्कृत्य सहसा हनिष्यति न संशयः ॥ एवं शप्तो मया ब्रह्मन् रावणो लोककण्टकः ॥ अर्चितं केवलं लिङ्गं परमेण समाधिना । पिंडिकारूपसंस्थानं विना तेन सुरोत्तमाः ॥ विष्णुना हि महाभागाः स वः सर्वं विधास्यति । देवदेवो महादेवो विष्णुरूपो

महेश्वरः। सर्वे यूयं प्रार्थयध्वं विष्णुं सर्वगुहाशयम् ॥
अहं च सर्वदेवानां पुरोवर्ती भवामि व इति ॥
ततस्तथैव नन्दिकेश्वरसमन्विता देवा वैकुण्ठं गत्वा
भगवन्तं प्रार्थयामासुः, तान्प्रति भगवानेवमुवाच ॥
शैलादिं च पुरस्कृत्य सर्वे यूयं त्वरान्विताः ॥ अवता-
रान्प्रकुर्वन्तु वानरीन्तनुमाश्रिताः ॥ अहं च मानुषो
भूत्वा अज्ञानेन समन्वितः ॥ संभविष्याम्ययोध्यायां
गृहे दशरथस्य च। ब्रह्मविद्या सहायोहं भवतां कार्य
सिद्धये॥ जनकस्य गृहे साक्षाद्ब्रह्मविद्या जनिष्यते।
भक्तो हि रावणः साक्षाच्छिवध्यानपरायणः॥ तपसा
महता युक्तो ब्रह्मविद्यां यदेच्छति॥ तदा तदुभयभ्रष्टं
रक्षो भवति तत्क्षणात्॥ सर्वेश्वरे न भक्तः स्यात्तस्या
वीक्षणतत्पर इति ॥ ततः सर्वे सुरगणा अवतारपरा
भवन्॥ वालिरिन्द्रांशसँभूतः सुग्रीवो भास्वतः सुतः॥
तथा ब्रह्मांशसंभूतो जाम्बवान् कपिकुञ्जरः॥ शिलाद
तनयो नन्दी शिवस्यानुचरः प्रियः। एकांशेन महाभागो
हनुमान् स महाकपिः। अवतीर्णाः सहायार्थं विष्णो
रमिततेजसः, इति च। अतः परमेश्वरः स्वानुचर
नन्दिप्रतिज्ञापरिपालनार्थं रावणवधोपायमुपदिष्टवतः
पश्चादज्ञानं परिगृह्य रघुनाथरूपेणावतीर्णवतः स्व-
मूर्त्येकरूपस्य नारायणप्रतिज्ञापरिपालनार्थञ्च चिरं

रावणगृहे सीताया वासनं संकल्पयामासेति युक्तमेव ॥ एवञ्च श्रीरामचन्द्रोऽवबुध्यतेचेत् तदानीमेव रावण संजिहीर्षयाबाणान् संदध्यात् तेन रावणवधनिर्वृत्तौ स्वसंकल्पवैतथ्यं तदनिवृत्तौ रामबाणस्य मोघतेति दोषद्वयस्यापि परिहारार्थं तदवबोधद्वाराणि परमेश्वर एव निरुरोधेति तात्पर्यम् ॥ १४ ॥

अथ हेत्वन्तरेणापि शिवस्य सर्वनियन्तृत्वे कवेस्तात्पर्यमाविष्करोति तत्रेति ॥

तत्रोद्यते सकलसंहरणाय भीत्या ।
सद्यो दशाननवधोऽस्त्विति वाञ्छया च ॥
यन्नाह रोपितशरं तमुपेत्य देव ।
स्तत्रापि सर्वजगदीश स एव हेतुः ॥१५॥

रघुनाथे क्रुधा देवासुरमानुषादिसकलत्रैलोक्यसंहरणाय कृतबाणसन्धाने देवासुरादीनां सर्वेषामपि महतीभीतिरुत्पद्येतैव । तस्य हि क्रोधस्त्रैलोक्यसंहरणप्रतिज्ञा तदर्थं बाणसन्धानञ्चैवं वर्णितानि । न धर्मस्त्रायते सीतां ह्रियमाणां महावने । भक्षितायां हि वैदेह्यां हतायामपि लक्ष्मण ॥ के हि लोके प्रियं कर्तुं

---

१ रामचन्द्रं । २ देवानामनुक्तिविषयेऽपि । ३ ईश्वरसंकल्प एव ।

शक्ताः सौम्य ममेश्वराः । कर्तारमपि लोकानां शूरं करुणवेदिनम् । अज्ञानादेवमन्येरन् सर्वभूतानि लक्ष्मण । मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् ॥ निर्वीर्य्य इति मन्येरन्नूनं मां त्रिदशेश्वराः । मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण ॥ अद्यैव सर्वभूतानां रक्षसां विलयाय च । संहृत्यैव शशिज्योत्स्नां महान्सूर्य इवोदितः ॥ संहृत्यैव गुणान्सर्वान्मम तेजः प्रकाश्यते । नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ॥ किन्नरा वा मनुष्या वा सुखं प्राप्स्यंति लक्ष्मण । ममास्त्रवाणसंपूर्णमाकाशं पश्य लक्ष्मण । निःसंपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् । सन्निरुद्धग्रहगणमावारित निशाचरम् ॥ विप्रणष्टाखिलमरुद्भास्करद्युति वर्जितम् । विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ॥ ध्वस्तद्रुमलता गुल्मं विप्रणाशितसागरम् । त्रैलोक्यन्तु करिष्यामि संयुक्तं कालधर्मणा ॥ न तां कुशलिनीं सीतां प्रदास्यन्ति सुरेश्वराः । अस्मिन्मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम् ॥ नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण । आकर्णपूर्णैरिषुभिर्जीवलोकं निरन्तरैः ॥ करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् । ममरोषप्रयुक्तानां सायकानां बलं सुराः ॥ द्रक्ष्यन्त्यद्य विमुक्तानामति दूरातिगामिनाम् । नैव देवा न दैतेया न पिशाच

न राक्षसाः । भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणाशिते । देवदानवयक्षाणां लोका ये रक्षसामपि ॥ बहुधा निपतिष्यन्ति बाणौघैः शकलीकृताः । निर्मर्यादानिमाँल्लोकान्करिष्याम्यद्य सायकैः। हृतां मृतां वा सौमित्रे न दास्यन्ति ममेश्वराः । तथा रूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् । नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् । इत्युक्त्वा रोषताम्राक्षो रामो निष्पीड्य कार्मुकम् ॥ शरमादाय संदीप्तं घोरमाशीविषोपमम् । संदधे धनुषा श्रीमान् रामः परपुरंजयः ॥ युगान्ताग्निरिव क्रुद्धो निःश्वसन्निदमब्रवीत् । यथा जरा यथा मृत्युर्यथा कालो यथा विधिः ॥ नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण । तथाहं क्रोधसंयुक्तो न निवार्योऽस्म्यसंशयम् ॥ पुरेवमे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम् । सदेवगन्धर्व मनुष्यगुह्यकं जगत्सशैलं परिवर्तयाम्यहमिति ॥ एवमतिक्रुद्धे रघुवीरे सकलत्रैलोक्यसंहरणोद्यते त्रैलोक्यवर्तिषु भूतेषु कस्य भीतिर्नोत्पद्येत । सागरमात्रसंहरणोद्यते हि तस्मिन् सर्वभूतत्रासो वर्णितः । एवंभूते समये लोकसंरक्षणाय शक्रादिषु केनापि देवेनागत्य सकलैरपि देवैर्दुर्धर्षेण रावणेन प्रसह्य हृता सीता तेन लङ्कां नीता जीवतीति रामं प्रति वक्तव्यं,

न च रावणभयात्तदनुक्तिरिति शङ्कनीयम्। रावणं हन्तुं समर्थस्य तदर्थं संरंभवतः कस्यचिदलाभे हि रावणात् भेतव्यम्, अस्मिन् वृत्तान्ते रघुवीरस्त्रैलोक्य संहरणाय संहितं शरं रावण एव सकलराक्षस सहिते प्रयुंजीत। तेन तदानीमेव तस्य सपुत्रबान्धवस्य वधोस्त्वितीच्छया देवेषु केनचिदागत्य वक्तुमेवोचितम्। रावणवधे सन्नद्धं रघुवीरमालक्ष्य शक्रेण तस्य युद्धसमये समारुह्यावस्थानार्थं मातलिः सारथिः स्वकीय रथोपि किल प्रेषितः, न चास्मिन्समयेपि तथोक्तम्, अतस्तदवचने प्रागुक्तः परमेश्वरसङ्कल्प एव हेतुः कविना विवक्षित इत्यर्थः॥ महाभारते हि साल्ववधार्थं कृतशरसन्धानः प्रद्युम्नो देवैः साल्वस्य कृष्णावध्यत्व विषयेश्वरसंकलपवचनेन निवारित इति वर्णितम्। "नैष वध्यस्त्वया वीर साल्वराजः कथंचन। संहरस्व पुनर्बाणं न वध्योयं त्वया रणे॥ एतस्य हि शरस्याजौ न वध्योस्ति पुमान्क्वचित्। मृत्युरस्य महाबाहो रणे देवकिनन्दनः॥ कृष्णः संकल्पितो धात्रा तन्नमिथ्या भवेदिह, इति तत्तुल्यसरणिरयं सन्दर्भः॥ १५॥

एवं कवेस्तत्तोक्तिभंग्या शिवमहिमाविष्करणं प्रपञ्चितम्, अथ कविनिबद्धस्य वक्तुर्विश्वामित्रस्य

वचनभंग्यापि तदाविष्करणं दर्शयति गङ्गेति—

गङ्गा शिवे शिरसि ते पतनेन पुण्या ।
पापाऽपनोदनविनोदपटीयसीति ।
देवादयोपि वसुधातलवासमाप्ताः ।
स्नातास्तथेति स वचोनिबबन्धचार्षम् ॥१६॥

तत्रतावत् भगीरथं प्रति तपसा प्रीतस्य ब्रह्मणो वचनं पठितम्, "गङ्गायाः पतनं राजन् पृथिवी न सहिष्यते । तां वै धारयितुं वीर नान्यं पश्यामि शूलिन इति, महाभारते तु तपसा प्रसादितया गङ्गयेत्थमुक्तं पठितम्, "करिष्यामि महाभाग वचस्ते नात्र संशयः । वेगन्तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ नक्षमस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप । अन्यत्र विबुधश्रेष्ठान्नीलकंठान्महेश्वरात्, इति ॥ ततस्तेन तपसा प्रसादितस्य शिवस्य परममङ्गले परमपावने मूर्ध्नि गङ्गायाः पतनं शिवेन कृतं तदवलेपनिर्धूननमित्यादिकं ॥ आकाशाद पतद्राम शिवे शिवशिरस्युत । अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ॥ विशाम्यहं हि पातालं स्रोतसागृह्य शङ्करं । तस्याऽवलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः । तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा । सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ॥ हिमवत्प्र-

तिमे राम जटामण्डलभास्वरे । इत्यादि संदर्भेणोक्त्वा तदनन्तरमुक्तम्, "तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ॥ भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ शापात्प्रपतिता ये च गगनाद्वसुधातलम् । कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ धूतपापाः पुनस्तेन तोयेनाऽथसुभास्वता । कृताभिषेको गङ्गायां बभूव विगतक्लम इति, तत्सर्वमेतेन श्लोकेन संगृहीतम् ॥ १६ ॥

एवं शिवमहिमातिशयप्रतिपादनं बहुषु स्थलेषु प्रविततमुदाहृत्य तन्निकर्षप्रतिपादनच्छायापन्नस्य चपलोक्तिनिभस्य परशुरामवाक्यसंदर्भस्य प्रतीयमानार्थतात्पर्यमाह नारायणस्येति—

नारायणस्य धनुषस्तव भीम चापा[1] ।
दुत्कृष्टतां गणयतः किल भार्गवस्य ॥
यन्मेनिरे त्वदधिकं तं[2]मितीह[3] वाक्यं ।
तद्बाधितञ्च वचनेन[4] रघूद्वहस्य ॥१७॥

श्रीरामचन्द्रेण जनकगृहे शैवन्धनुस्समारोपयता भग्नमित्याकर्ण्य तथाविधं क्षत्रियोत्कर्षमसहमानो भार्गवः पथि समागतः स्वहस्तेस्थितं वैष्णवं धनुः

१ परशुरामस्य । २ नारायणम् । ३ रामायणे । ४ नारायणरूपादस्माच्छिवदत्तशूलस्योत्कर्षत्वबोधकरामचन्द्रवचनेन ॥

शैवाद्धनुषोऽधिकं मन्वानः श्रीरामचन्द्रं प्रति, इदं धनुः समारोप्य तत्र शरसंधानं कुरु ततस्तव मया सह युद्धयोग्यतामालक्ष्य त्वया योद्धास्मीत्युक्तिसमये, इदमुपाख्यानमाह, पुरा शिवनारायणयोर्बलतारतम्यं जिज्ञासमानैर्देवैः प्रार्थितेन कमलभुवा तेन तयोः केनचिदुपायेन विरोध उत्पादिते विश्वकर्मणा निर्माय दत्तमिदन्धनुर्द्वयं गृहीत्वा ताभ्यां प्रवृत्ते युद्धे शिवो नारायणेन निर्ज्जितो देवाश्च तदा नारायणमधिकं मेनिरे, इति, तस्य स्वार्थे न तात्पर्यम्, तयोर्मध्ये शिवस्य बलोत्कर्षं नारायणमूर्तिरूपादस्माच्छिवदत्तस्य कस्यचिच्छूलस्योत्कर्षञ्च प्रतिपादयता श्रीरामचन्द्रवचनेन बाधितत्वात् ॥ १७ ॥

ननुकथाद्वयमपि रामायणगतं कुतस्तयोर्बलाबलविवेक इत्याशंक्याह दृप्तस्येति—

दृप्तस्य कोपकलुषस्य वचः किलाद्यं ।
धर्मस्य विग्रहवतस्तु वचो द्वितीयम् ।
युद्धे क्वचित् त्वदधिकत्वमरैर्वचश्च ।
त्वद्दत्तसत्यवरनिर्वहणाय युक्तम् ॥ १८ ॥

१ क्रोधाकुलितचित्तस्य परशुरामस्येतिशेषः । २ धर्ममूर्त्तिरूपस्य रामचन्द्रस्येति शेषः ॥

काव्यवक्त्रैक्येन वक्तृगुणाऽनुगुणबलाऽबलविभाग-माश्रित्यावश्यसमाधेयविरोधसमाधानाऽसंभवे कवि निबद्धवक्तृगुणदोषानुसारिणा बलाबलविभागेन वा स समाधातुमुचितः ॥ इहचाद्योपाख्यानस्य वक्ता भार्गवोऽतिदृप्तः प्रसिद्धस्तदानीञ्च क्रोधान्ध इति, स्वस्य क्षत्रियवधादुपरतिं शस्त्रसन्यासञ्च परित्यज्य चपल इति विदितः ॥ द्वितीयोपाख्यानवक्ता श्रीराम-चन्द्रस्तु "धर्मो विग्रहवान् राम इत्यादि कविवचनैः "विद्धि मामृषिभिस्तुल्यं केवलं धर्ममाश्रितमित्यादि स्ववचनैश्च "रामोद्विर्नाभिभाषते, इत्यादि वचनैः स्वव-चनस्य सूनृततया च धर्मैकनिरतः सत्यसन्धइति प्रसि-द्धः ॥ अतस्तद्वचनेन तद्विरोधिनो भार्गववचनस्य बा-धनं युक्तं ॥ एतेन "ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्र-स्त्रिनेत्रस्त्रिपुरान्तको वा। इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम्, इति रावणं प्रति हनुम-द्वचनमपि व्याख्यातम् ॥ तदपि हि रावणभयोत्पा-दनार्थत्वेनान्यथा सिद्धं वचनान्तरविरुद्धं न स्वार्थं बोधयितुमीष्टे॥ यथा "मत्तः प्रत्यवरः कश्चिन्नास्ति सु-ग्रीवसन्निधौ । अहं तावदिह प्राप्तः किं पुनस्ते महा-बलाः ॥ नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जना इति, सीतां प्रति हनुमतो वचनं सीताश्वासनार्थत्वे

नाऽन्यथासिद्धं । एतादृशान्यथासिद्धिरहितन्तु “एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा, इति, श्रीरामचन्द्रवचनं शिवस्य तदपेक्षया बलोत्कर्षं व्यनक्ति ॥ अत्र हि शिववर्णनं दीपकालङ्कारद्योत्यायामुपमायां शिवस्योपमानत्वसिध्यर्थं, उपमेयादधिकगुणमेवोपमानं भवतीति कविसमयो मुखचन्द्रादौ प्रसिद्धः ॥ एवं प्रमाणबलाबलपर्यालोचनया बाध्यबाधकभाव उक्तः ॥ अथ प्रमाणपर्यालोचनया भार्गववर्णितोपाख्यानस्याऽन्यथासिद्धिरुच्यते ॥ शिवोनारायणेन निर्ज्जित इति खल्वस्मिन्नुपाख्याने वर्णितम्, सोयमर्थः शिवेन कदाचिन्नारायणाय स्वदत्तं वरं परिपालयितुमभिनीतः स्वस्य पराजयः । कथं । भारते हि द्रोणपर्वणि द्रोणवधानन्तरमतिकुपितेनाश्वत्थाम्ना, अर्ज्जुनं प्रति स्वप्रहितं नारायणास्त्रं भगवता कृष्णेन वितथीकृतमालक्ष्य व्रीडितेन धिग्धिगिति शस्त्रं परित्यज्य दक्षिणां दिशं प्रति प्रस्थितेन मध्येमार्गं मिलिताद्वेदव्यासादाकर्णितं यदुपाख्यानं पुरानारायणाय षष्टिं वर्षसहस्राणि मैनाके महता तपसा शिवमाराधितवते शिवेन बलवीर्यपराक्रमादिकं सर्वत्राऽप्रतिहतं दत्तमिति, तत्रेदं वरान्तरमपि शिवेन तस्मैदत्तमिति वर्णितम्॥ अपिचेत्समरं प्राप्य भविष्यसि ममाधिक इति,

हरिवंशेच पारिजातहरणसिध्यर्थं शिवमाराध्यस्तुवते कृष्णाय, अयमेव पुरादत्तो वरः स्मारित इति वर्णितं ॥ इतिसंस्तूयमानस्तु भगवान् गोवृषध्वजः । प्रसार्य दक्षिणंहस्तं वासुदेवमथाब्रवीत् ॥ मनीषितानामर्थानां प्राप्तिस्तेस्तु सुरोत्तम । पारिजातंतु हर्तासि माभूत्ते मनसो व्यथा । पुरामैनाकमाश्रित्य तपस्त्वमकरोर्यदा । तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि । अवध्यस्त्वमजेयस्त्वं मत्तः शूरतरस्तथा । भवितासीत्यवोचं यत्तत्तथा न तदन्यथा, इति ॥ तस्मादन्यथासिद्धेरपि न तदुपाख्यानेऽभिनिवेशः कार्य इति ॥ १८ ॥

एवं श्रीरामायणे सर्वत्र शिवमहिमप्रख्यापनसत्त्वात् क्वचिद्विरोध्यभावाच्च शिवमहिमातिशय एव तस्य प्रधानप्रतिपाद्य इत्याह इत्थमिति—

इत्थं तव श्रुतिशतप्रथितं परत्वं ।
प्राधान्यतः स्मरहर प्रतिपादनीयम् ॥
द्वारन्तु रामचरितं कविना गृहीतं ।
रामायणे महितमुत्तमकाव्यरत्ने ॥ १९ ॥

उत्तमकाव्यं हि तदुच्यते यत् ध्वन्यमानार्थप्रधानं

१ श्रुतिसहस्रेषु तत्प्रमाविषयत्वेनप्रसिद्धं । २ निरतिशयोत्कर्षं ॥

तदभिव्यञ्जनसमर्थोत्तमनायकचरितनिबन्धनरूपञ्च, तदिह श्रीरामचन्द्रं काव्यनायकं कृत्वा तच्चरितनिबन्धनद्वाराशिवस्यपरभावःकविनाध्वन्यध्वन्यध्वन्येन प्रख्यापितः इत्यर्थः ॥ ननु "स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ। वेदोपबृंहणार्थाय तावग्राहयत प्रभुः, इति श्रीरामायणस्य वेदोपबृंहणत्वमुचितम्, तत्तु सिध्येत् यदि प्रधानप्रतिपाद्यत्वाभिमतस्य शिवपरभावस्य वेदप्रमितत्वं स्यादित्याशंक्यविशेषितं, श्रुतिशतप्रतिपन्नमिति, "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्तेसंप्रसूयन्तेसर्वाणि चेन्द्रियाणि सह भूतैः न कारणं कारणानां धाता ध्याता, कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये क्षणमेकं तं लब्ध्वा क्रतुशतस्यापि चतुःसप्तत्या यत्फलं तदवाप्नोति शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य समाप्ताऽथर्वशिखा । इत्यथर्वशिखोपनिषदि "यस्मात्सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रपूर्वकम् ॥ सहभूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ॥ कारणानांच यो धाता ध्याता परमकारणम् ॥ न संप्रसूयतेऽन्यस्मात्कुतश्चन कदाचन ॥ स सर्वैश्वर्यसंपन्नो नाम्ना सर्वेश्वरः स्वयम् ॥ सर्वैर्मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः ॥ सर्वमन्यत्परित्यज्य शिव एव शिवंकरः॥ परो ध्येयोऽथ देवेशः समाप्ताऽथर्वणी श्रुतिरित्या-

दिशिवपुराणोपबृंहितायामन्यासुचाथर्वशिरःश्वेताश्वतरकैवल्योपनिषदादिषु बहुपुराणवचनप्रपञ्चोपबृंहितासु प्रसिद्धः शिवस्य परभावः । किञ्च श्रीरामायणं सावित्रीमन्त्रगर्भं चतुर्विंशतिसहस्रेषु सहस्रस्य सहस्रस्यादौ क्रमनिवेशितसावित्रीवर्णचतुर्विंशतिकमिति पूर्वं पूर्वेभ्योवच एतदूचुरित्यादिन्यायेन तदभियुक्तपरम्परा संप्रदायसिद्धं, तेन सावित्र्यर्थप्रधानं श्रीरामायणमिति ज्ञायते, तदर्थः सवितुर्वरेण्यः शिव एवेति सवितृमण्डल विद्यादिषु सुप्रसिद्धमेव। श्रीरामायण एव चादित्यहृदये सवितुर्वरेण्यस्त्रिमूर्त्युत्तीर्णः शिव एवेति भावितम् ॥ ततोपि शिवमहिमप्रख्यापनपरतयैव श्रीरामायणस्य वेदोपबृंहणत्वं समर्थितमित्यलं पल्लवितेन ॥ १९ ॥

केचित्तु वैष्णवाभिमानिनो वदन्ति भगवत्प्रपदनं भरन्यासविद्या, साऽत्रसकृदनुष्ठिता स्वानुष्ठानदेहावसान एवाऽन्तिमस्मृतिमप्यनपेक्ष्यमुक्तिप्रदा, तस्मादयमुपायान्तरेभ्यः श्रेयान्मुक्त्युपायः, तदेवेहन्यासविद्यारूपं भगवत्प्रपदनं मुमुक्षोर्विभीषणस्य प्रपदनप्रपञ्चेनोपबृंहितं, तदेवास्य प्रधानं प्रतिपाद्यमिति, तन्मतमनूद्य निरस्यति केचिदिति—

केचिद्विभीषणसमाचरितं प्रधानं ।
कोणेश्रुतं प्रपदनं प्रतिपाद्यमाहुः ।

प्राधान्यमत्र कथमुत्तमनाम्नि काव्ये ।
वाच्यातिशायिविषयार्थितदश्नुवीत ॥२०॥

त्रिविधंहि काव्यमुत्तममध्यमाऽधमभेदात् । यत्र वाच्यातिशायि व्यंग्यं तदुत्तमं ॥ यत्र व्यंग्यं वाच्यस्य गुणीभूतं तन्मध्यमम् । यत्र व्यंग्यमेव नास्ति तदधमम् । काव्यस्य ह्यात्मा ध्वनिः, शब्दार्थौ वपुःस्थानीयौ, इति सहृदयानां मर्यादा । तत्र व्यंग्यरहितं काव्यं निरात्मकं वपुर्मात्ररूपमित्यधमं, चार्वाकमतपक्षपातित्वात् । वस्तुतो गुणप्रधानभावार्हयोर्वाच्यव्यङ्ग्ययोस्तद्वैपरीत्याद्गुणीभूतव्यङ्ग्यं मध्यमं, ये वस्तुतो गुणप्रधानभूतयोर्देहात्मनोः कदाचिन्मम शरीरमित्यादिबुध्या विविच्य जानन्तोपि देहात्मभ्रमप्राचुर्येण देहप्रधाना लौकिकास्तदनुसारित्वात्, तथाभूतमिदं व्यासप्रभृतीनां महाकवीनां पुरस्ताद्गणनीयेन महाकविना भगवता प्राचेतसेन कृतं काव्यं न भवति, किन्तूत्तमंकाव्यमित्येव महनीयं, सम्मतञ्च सहृदयानां सर्वेषामपि तथैव, अतोऽत्र ध्वनिप्राधान्यमपहाय वाच्यप्राधान्यमुच्यमानमुपहासायैव कल्पत इति ॥ २० ॥

अथ काव्यमर्यादामपहाय फलगौरवेणास्य प्रपदनस्य प्राधान्यमुच्येत तदपि नास्तीत्याह स्याच्चेदिति—

स्याच्चेत्तदीश फलगौरवतः प्रधानम्[1] ।
इक्ष्वाकुनायकसमाचरितं[2] तथास्यात् ।
तच्चापि वायसकृतं[3] धनलाभतोपि ।
दारात्मलाभमधिकं हि बुधा वदन्ति ॥२१॥

राज्ययोगेप्सया विभीषणेन प्रपदनं कृतम्, दारेप्सया श्रीरामचन्द्रेण सुग्रीवप्रपदनं कृतं, "सुग्रीवं शरणं गत इतिबहुधाम्रेडितत्वात्, वायसेनतु तन्मुक्तास्त्रेणाऽऽत्मनाशमाशंक्य तत्प्रतिष्ठानरूपलाभार्थं तस्यैव प्रपदनं कृतं, तदपि "त्रीन् लोकान् संपरिक्रम्य तमेवशरणं गत इति कविना दर्शितं, तत्र धनदारात्मलाभफलानां प्रपदनानां मध्ये कस्य फलमधिकमितित्वमेव विमृश, "राजानं प्रथमं विन्देत्ततोभार्य्यां ततो धनमित्यात्मपरित्राणार्थं राजन्वती भूः प्रथममेष्टव्या, तत्र गृहं कृत्वा वासार्थं भार्य्या समेष्टव्या, ततस्तद्भरणार्थं धनमेष्टव्यमिति धनदारात्मनामुत्तरोत्तरस्य पूर्वपूर्वशेषिभावेनोत्कर्षौ नीतिशास्त्रेष्वन्वयमुखेन दर्शितः । आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि । आत्मानं सततं रक्षेद्दारैरपि धनैरपि, इति व्यतिरेकमुखेनाप्ययमर्थो दर्शितः । तस्मात् फलभूम्ना प्राधान्यञ्चेत् श्रीरामचन्द्रकृतस्य

१ प्रपदनम् । २ रामचन्द्रसमाचरितम् । ३ जयन्तकृतम् ॥

वायसकृतस्यैववाप्रपदनस्यप्राधान्यंप्रसज्येतेत्यर्थः॥२१॥

ननु विभीषणकृतं प्रपदनं मुक्त्यर्थमिति फलगौरवेण वाच्यस्यैव तस्य प्राधान्यमुक्तम्, न काव्यमर्य्यादा सिद्धं प्राधान्यमित्याशङ्क्याह तच्चेदिति—

तच्चेद्विमुक्तिफलकं फलगौरवं स्यात् ।
राज्येप्सयैव तु कृतं तदिति प्रसिद्धम् ।
श्रीरामचन्द्रपवनात्मजयोऽश्चसूक्त्या ।
साक्षाच्च तस्य वचनेन विभीषणस्य ॥ २२॥

न मुक्त्यर्थं विभीषणेन प्रपदनं कृतं, किन्तु राज्यभोगार्थं तदेतत्पवनात्मजादिवचनैः स्पष्टम्, तत्र विभीषणागमनसमये पवनात्मजवचनम्, "उद्योगं तवसंप्रेक्ष्य मिथ्यावृत्तञ्च रावणम् । वालिनं च हतं श्रुत्वा सुग्रीवं चाऽभिषेचितम् । राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः, इति । तत्रैव सुग्रीवादीन् प्रति श्रीरामचन्द्रवचनम्, "न वयं तत्कुलीनाश्च राज्याकांक्षीच राक्षसः । पंडिता हि भविष्यंति तस्माद्ग्राह्योविभीषणः, इति । तथा नागपाशबन्धेपि श्रीरामचन्द्रवचनम्, "यन्मया न कृतोराजा राक्षसानां विभीषणः । मिथ्या प्रलापिनं माञ्च प्रवक्ष्यन्ति न संशयः, इति ॥ तत्रैव शोकार्तस्य विभीषणस्य

१ विभीषणकृतं प्रपदनम् । २ प्रपदनम् ॥

वचनम्, "ययोर्वीर्यं समाश्रित्य प्रतिष्ठा कांक्षिता मया । तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ, इति ॥ एतेनेयमपि शङ्का निरस्ता, राज्यलाभमान्तरालिकं प्रयोजनं कृत्वा मोक्षार्थं विभीषणः प्रपन्न इति, रामे विष्णुत्वबुद्धौ सत्यामेव मोक्षार्थं तत्प्रपदनमिति कल्प्येतापि, न तत्र सा बुद्धिस्तस्यास्ति, तथासति नागपाशबन्धेन मूर्छितौ रामलक्ष्मणौ दृष्ट्वा एवं प्रलापाऽनुपपत्तेः, न विष्णोरित्थमापत्कदाचिदपि प्रसज्यते, अभिनयमात्रमिदं किंचित्कालमित्याश्वासोपपत्तेः ॥ २२ ॥

ननु विभीषणप्रपदनं मुक्त्यर्थं न भवतीतिचेत् प्रपदनानन्तरं "परित्यक्ता मया लंका मित्राणि च धनानिचेति वचनं न स्यात्, नह्यमुमुक्षोरविरक्तस्य सर्वत्याग वचनं संभाव्यत इत्याशंक्याह लङ्केति—

लंकासुहृद्धनसुखाऽनुभवादिसर्वम् ।
त्यक्तं मयेति तु वचो न ततोविरक्त्या ।
श्रीरामचन्द्रकरुणार्द्रकटाक्षलब्धे ।
तत्रैव[2] रागपिशुनः खलु वाक्यशेषः ॥ २३ ॥

"भवद्गतं मे राज्यञ्च जीवितञ्च सुखानिचेति तदुत्तरार्द्धरूपो वाक्यशेषस्तत्रैव लंकाराज्यादौ राम-

१ लंकादेः । २ लंकादौ ॥

चन्द्रप्रसादलब्धे रागं व्यञ्जयति, अतो लंकादेर्न्नस्वरूप-तस्त्यागविषयं पूर्वार्द्धम्, किन्तु रामचन्द्रप्रसादाऽलब्धं तन्माभूदित्येतदभिप्रायं, तेन लंकाधिपत्यादिकं त्वया मह्यं दातव्यमिति व्यज्यते ॥ २३ ॥

अत्रैव गमकत्वेन विभीषणवचनानन्तरं प्रवृत्तं श्रीरामचन्द्रव्यापारमुदाहरति ज्ञात्वेति—

ज्ञात्वा तदीप्सितमितोऽथ रघुप्रवीर।
स्तेनैव रावणबलादि च वाचयित्वा।
कृत्वा च रावणतदिष्टवधप्रतिज्ञां।
राज्याधिपत्यमददादभिषेकपूर्वम् ॥ २४ ॥

श्रीरामचन्द्रो विभीषणस्येदं वचनमाकर्ण्य तदभि-प्रायं बुध्वा तत्र क्रिया केवलमुत्तरमिति तदानीमेवाऽभि-षेकपूर्वकं लंकाराज्याधिपत्यं तस्मै ददौ, कथमिदानी-मन्यदीयतया स्थितस्य राज्यस्य तस्मै दानमिति पश्य-तामऽस्थाने व्यापारोयमिति शंकावारणार्थम्। अहत्वा रावणं संख्ये सपुत्रं सह बान्धवम्। अयोध्यां न प्रवे-क्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे। इत्यभिषेकात्प्रागेव रावणतदीयपरिवारवधप्रतिज्ञा कृता। प्रतिपक्षबलम-ज्ञात्वा हठात्क्रियमाणेयं प्रतिज्ञाप्यस्थान इति तेषा-

१ विभीषणेप्सितम्। २ विभीषणमुखेनैव ॥

मेव शंकावारणाय प्रतिज्ञायाः प्राग्विभीषणवचनश्र-
वणानन्तरमेव "आख्याहि मम तत्वेन राक्षसानां बला
बलमिति" विभीषणं प्रति पृष्ट्वा तन्मुखेन रावणस्य सर्व
मपि बलं वाचितम्, आख्याहीत्यस्य प्रश्नस्य करिष्य-
माणाभिषेकोपयोगाभिप्रायो न वर्ण्यते चेत् विभीषणेन
यत्प्रार्थितं तन्नोत्तरं किमप्यनुक्त्वा रामेणान्यदेव पृष्ट-
मिति वैयधिकरण्यं स्यात्, तस्माद्विभीषणोक्त्यनन्तरं
श्रीरामचन्द्रव्यापारपर्यालोचनयापि विभीषणोक्तिः
केवलं रामचन्द्रप्रसादलभ्यराज्यप्रार्थनाऽर्थेति निश्चीी-
यत इत्यर्थः । अतः केवलं राज्य प्रेप्सयैव रामचन्द्र-
प्रपदनम् । रामचन्द्रस्यापि राज्यप्रदानमात्रविषया
प्रतिज्ञा । अतएव नागपाशबद्धस्य रामस्य विभीषणाय
प्रतिज्ञातराज्यं नदत्तमित्येवाऽऽर्तवचनं, रावणवधान-
न्तरमभिषेकपूर्वकं विभीषणाय लंकाराज्यप्रदानेनैव
रामस्य विभीषणविषये कृतकृत्यत्वबुध्या प्रमोदो बा-
लरामायणे कथितः। अभिषिच्य च लंकायां राक्षसेन्द्रं
विभीषणं । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोदह,
इति । तस्माद्विभीषणप्रपदनस्य फलगौरवकृतं पारि-
भाषिकमपि प्रधानप्रतिपाद्यत्वं न संभवतीति पूर्वोक्त
रीत्या रामायणे प्रायः सर्वत्र ध्वन्यमानं शिवपारम्यमेव
तस्य प्रधानप्रतिपाद्यमिति सिद्धं । यद्यपि ध्वन्यमान-

त्वाऽविशेषाद्रामायणे तत्र तत्र व्यञ्जितः शृङ्गारवीरकरुणाद्भुतरौद्रादिको रसो देवतागुरुनृपपितृपुत्रादिविषयरतिरूपो भावोपि प्राधान्यमर्हति, तथापि रामायणे सर्वत्र प्रविततः शिवपारम्यरूपो वस्तुध्वनिः प्राधान्यमश्नुत इत्यत्र नास्ति विमत्यवकाशः । अतो रामायणं शिवमहिमप्रख्यापनप्रधानं भवत्येवेति सिद्धम् ॥ २४ ॥

अथ स्तोत्रस्य प्रचयगमनार्थं समाप्तौ नमस्कार रूपं मङ्गलं क्रियते प्राचेतसायेति—

प्राचेतसाय कवये प्रथमाय तस्मै ।
तत्काव्यहारतरलाय च राघवाय ।
विश्वात्मने तदुभयास्थिरभावलक्ष्य ।
मुख्यास्पदाय विभवे च नमः शिवाय ॥२५॥

इति श्रीमद्भारद्वाज कुलजलधिकौस्तुभ श्रीमदद्वैतविद्या
चार्य श्री विश्वजिद्याजि श्री रंगराजाध्वरिवर
सूनोरप्पयदीक्षित कृतिः श्रीरामायण-
सारसंग्रहस्तोत्रविवरणम्
सम्पूर्णम् ॥

मार्गे सहायं भगवन्तमेव ।
विश्वस्य विश्वाधिक निर्गतोस्मि ।
शास्त्रं प्रमाणं यदि सा विपत्सा ।
त्तस्यैव मन्दो मयि यां चिकीर्षेत् ॥ १ ॥

कांतारे प्रांतरे वा मदकुशलकृतौ सांतरं सांतरंगम्।
मह्यं द्रुह्यंतमंतं गमयतु भगवानंतकस्यांतकारी ।
क्षिप्रं विप्राधमस्य क्षिपतु तदुदरस्येव माया विवर्त्तां।
नार्त्तान्बंधूनबंधूनिवममशिशिराभ्यंतरान्संतनोतु॥

सहस्रं वर्ततां पथिपथि परे सहसकृतम् ।
प्रवर्ततां बाधं मयि विविधमप्यारचयितुम् ।
न लक्षीकुर्वेहं नलिनजलिपि प्राप्तमपितम् ।
मम स्वामी चामीकरशिखरिचापोस्तिपुरतः ॥३॥

संकल्प्यस्थाणुशास्त्रप्रचरणविहतिः स्वेन कार्यांभुवीति श्मश्रूणि स्वैरमश्रूण्यपि खलु महतां स्पर्द्धया वर्द्धयंतम् । क्षुद्रं विद्रावयेयुर्झटिति-वृषपति क्रोधनिश्वासलेशाः शास्त्रं शैलादभृत्या स्तनुयुरखिलभूमंडलव्याप्तमेतत् ॥ ४ ॥

क्वचिदवयवे दग्धुं कश्चिद्बलादनुचिंतयन् ।
निरसनमितोदेशात्कर्तुं महेश्वरमाश्रितान् ।

प्रमथपरिषद्रोषैर्दग्धाऽखिलावयवः स्वयम् ।
निरसन मितोल्लोकादेव क्षणेन समश्नुताम् ॥५॥

कालप्रतीक्षा हि न तस्य कार्या ।
पुलस्त्यपुत्राऽऽदिवदन्तकारे ।
त्वदाश्रितद्रोहकृतोद्यमानां ।
सद्यःपतेदेव हि मूर्ध्नि दंडः ॥ ६ ॥

कण्ठे रुद्राक्षमालां भसितमतिसितं फालदेशे
च पश्यन् नश्यन्नेव क्रुधं यस्तदुपहतमति
स्सत्सुकुर्वीत गुर्वीं । तत्कालात्तूर्णमायुर्लिखित
मसुगणश्चापि तत्कण्ठदेशात् कुर्द्यास्ते ह्युद्ध
रेयुर्निजपदकमलांगुष्ठलीलाविलासात् ॥७॥

सकलभुवनकर्ता साम्बमूर्तिः शिवश्चेत् ।
सकलमपि पुराणं सागमं चेत्प्रमाणम् ॥
यदि भवति महत्वं भस्मरुद्राक्षभाजाम् ।
किमितिनमृतिरस्मद्द्रोहिणस्स्यादकाण्डे ॥८॥

इति श्रीभारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य
श्रीमदप्पयदीक्षितकृतं चक्रांकितनिग्रहाष्टकं
संपूर्णम् । श्रीरस्तु । शुभमस्तु ॥

श्री गणेशोविजयते ।

# श्री भारतसारसंग्रह स्तोत्रविवरणम् ।

अथ श्रीमहाभारतस्य शिवपारम्यप्रख्यापनपरता माविष्कर्तुं कृतस्यस्तोत्रस्यायमाद्यः श्लोकः—

श्रीबादरायणमुनिः[1] स्वयमेव विष्णुः ।
पार्थच्छलात्[2] तमधिकृत्य[3] कृते प्रबन्धे[4] ।
तस्यापि[5] नित्यमहितं[6] शशिभूषण त्वा ।
माम्रेडयन्[7] गुरुरदर्शयदादितत्त्वम्[8][9] ॥ १ ॥

श्रीबादरायणनामा प्रसिद्धोमुनिः स्वयमेव विष्णुः । कृष्णद्वैपायनं व्यासं विद्धि नारायणं स्वयम् । कोह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेदिति वचनात्, न च श्रीमहाभारताख्यं प्रबन्धं पार्थचरितवर्णनात्मकं, तद-

१ वेदव्यासः । २ अर्जुनादिव्याजेन । ३ कृष्णमुद्दिश्य । ४ भारते । ५ कृष्णस्यापि । ६ कृष्णेन सदा पूज्यमानम् । ७ पुनःपुनः कथयन् । ८ वेदव्यासः । ९ तव परब्रह्मतत्वम् ॥

नुषक्तश्रीकृष्णचरितान्तर्गततन्माहात्म्यवर्णनात्मकं च निर्ममे। वासुदेवस्य माहात्म्यम् पाण्डवानाञ्च सत्यताम्। दुष्टतां धार्तराष्ट्राणामुक्तवान्भगवानृषिरिति वचनात्, अत्र च प्रबन्धे पार्थानां नायकीकरणं व्याजमात्रं, तत्संरक्षणजागरूकश्रीकृष्णमाहात्म्यवर्णनात्मकमेव तत्प्रवृत्तं, तद्बाहुल्यात्तदधीनत्वाच्च पार्थानां राज्यलाभस्य भारतस्यादौ । नमोभगवते तस्मै व्यासायामिततेजसे । यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम्। इति सूतवचने श्रीमहाभारतस्य नारायणकथेत्येव व्यवहृतत्वाच्च, एवं भूतं श्रीमहाभारतं कुर्वाणः सर्वेषां ब्रह्मविदां गुरुर्भगवान् व्यासः श्रीकृष्णमाहात्म्यवर्णनद्वारा शिव एव परंब्रह्मेति शिष्येभ्यः परं तत्वं दर्शयामास । किंकुर्वन्, तस्य श्रीकृष्णस्यापि नित्यमर्हितं नित्यं पूजितं तेनापि कृष्णेन कृष्णावताररूपेण प्राक् परिगृहीतैः पूर्वं पूर्वरूपैः परवासुदेवात्मकमूलरूपेण च सदा पूज्यमानमिति यावत्, एवं भूतं शिवमाम्रेडयन् पुनः पुनः कथयन्सन् प्रायः सर्वत्रापि हि महाभारते श्रीकृष्णस्य शिवपूजानिष्ठत्वं तत्प्रसादलब्धसकलप्रभाववत्वञ्च वर्ण्यते, तत्र तावत् सौप्तिके, अश्वत्थामानं प्रति शिव वचनम् । सत्यशौचार्जवत्यागैस्तपसा नियमेन च । क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरा। अहं

यद्भवताराध्यः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्योमम न विद्यतइति ॥ आदिपर्वणि च सुभद्रापरिणयवर्णनप्रस्तावे समुद्रमध्ये क्वचिद्द्वीपविशेषे कृष्णेन शिवस्य पूजार्थं प्रवर्तितो महोत्सवः प्रपञ्चितः । उपमन्यूपदेशेन श्रीकृष्णस्यापि द्वादशाब्दावधि पाशुपतव्रतानुष्ठानं कैलासयात्रायामन्यत्र च तत्र पूजा स्तुतितपोभिः कृष्णेन शिवप्रीणनमेव कृतमिति प्रपञ्चेन वर्णितम् ॥ द्रोणपर्वणि द्रोणवधानन्तरं क्रोधेन स्वप्रहितं कृष्णार्जुनयोर्वितथीभूतमाग्नेयास्त्रं दृष्ट्वा व्रीडया धिग्धिगिति शस्त्रं परित्यज्य दक्षिणान्दिशं प्रति प्रस्थितमश्वत्थामानं प्रति मार्गे समागतस्य श्रीवेदव्यासस्य तद्व्रीडापनयनार्थं वचनम् । देवदेव स्त्वचिन्त्यात्मा अजेयो विष्णुरव्ययः । सत्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति यःप्रभुम् ॥ तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजे ॥ इति ॥ तत्रैव कृष्णार्जुनौ पूर्वं नरनारायणावृषी, ताभ्यां च लिङ्गेऽर्चनया षष्टिवर्षसहस्राणि शिवमाराधितवद्भ्यां शिवेन अतुलबलवीर्यपराक्रमादयो बहवो वरा दत्ता इति वेदव्यासेन कथिते, अहं किन्न शिवपूजक इति कृतानुयोगमश्वत्थामानं प्रति तस्यैव वचनम् । जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः । ताभ्यां लिङ्गेऽर्चितो देवस्त्वयाऽर्चा

यां युगे युग इति ॥ इदं च मैनाके श्रीकृष्णस्य तपश्चरणं बहुवरलाभश्चेत्युभयं पारिजातजिहीर्षया शिवं संपूज्य स्तुवन् कृष्णः शिवेनैव स्मारितः ॥ इति संस्तूयमानस्तु भगवान् गोवृषध्वजः । प्रसार्य दक्षिणं बाहुं वासुदेवमथाब्रवीत् ॥ मनीषितानामर्थानां प्राप्तिस्तेस्तु सुरोत्तम । पारिजातञ्च हर्तासि माभूत्ते मनसो व्यथा ॥ पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा । तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नु हि ॥ अवध्यस्त्वमजेयस्त्वं मत्तः शूरतरस्तथा । भवितासीत्यवोचं यत्तथा न तदन्यथा, इति ॥ एवं श्रीकृष्णस्य स्वरूप पूर्वगृहीतरूपैः कृते शिवाराधने अनेकानि वचनान्युदाहृतानि, तस्य मूलरूपेण कृतं शिवस्याराधनं ततो वरलाभश्चेत्युभयमारण्यपर्वणि तीर्थयात्राविधौ दर्शितम् । ततो गच्छेत्सुपर्णाख्यं त्रिषु लोकेषु विश्रुतम् । यत्र विष्णुः प्रसादार्थं शिवमाराधयन्पुरा ॥ वरांश्च सुबहूंल्लेभे दैवैरपि सुदुर्ल्लभान् । दत्तांश्च त्रिपुरघ्नेन परितुष्टेन भारत ॥ अपि चान्यैः प्रियतमो लोके कृष्ण भविष्यसि । त्वन्मुखञ्च जगत्सर्वं भविष्यति न संशय इति ॥ अन्यैः प्राचीनत्वच्चरितेभ्योऽन्यैः मद्वरदानलब्धसामर्थ्येन करिष्यमाणैः देवमनुष्यादिकण्टकासुरराक्षसादिवधैः लोके भूम्यन्तरिक्षस्वर्गादौ सर्वत्र

प्रियतमो देवमनुष्यादीनां प्रीति विषयो भविष्यसि । अतएव जगत्सर्वं त्वन्मुखं त्वत्प्रधानञ्च भविष्यतीत्यर्थः ॥ एवं देवादिकण्टकवधेन संभावितस्य दोषस्य प्रायश्चित्तमपि शिवाराधनरूपमेव भगवता कृतमिति तीर्थयात्राविधाने पठ्यते । "तीर्थं कुरुकुलश्रेष्ठ त्रिषु लोकेषु विश्रुतम् । प्रमीति नाम्ना विख्यातं सर्वपाप विमोचनम् ॥ यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् । तत्र स्नात्वाऽर्चयित्वा च रुद्रं देवगणेश्वरम् ॥ जन्मप्रभृति पापानि कृतानि नुदते नरः । देवी यत्र नरश्रेष्ठ सर्वदेवैरभिष्टुता ॥ तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् । जित्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना ॥ पुरा शौचं कृतं राजन् हत्वा दैवतकण्टकान् ॥ इति ॥ अत्र शौचशब्देन शिवाराधनमेव प्रायश्चित्तमुक्तम् । यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरमिति सन्निधानपाठात् । तीर्थयात्रा विधावेव नारायणादिसहितस्य हिरण्यगर्भस्य शिवभक्ताराधनोक्त्या कैमुतिकन्यायेन शिवाराधकत्वमपि भगवतो नारायणस्य विभावितम् । ततो गच्छेत राजेन्द्र तीर्थं शतसहस्रकम् । सहस्रकञ्च तत्रैव द्वे तीर्थे लोकविश्रुते । उभयोर्हि नरः स्नात्वा गोसहस्रफलं लभेत् ॥ अत्र ब्रह्मा स्वयं नित्यं देवैः सह महीपते । अन्वास्यते कुरुश्रेष्ठ नारायणपुरोगमैः ।

सान्निध्यं तत्र राजेन्द्र रुद्रपत्न्याः कुरूद्वह । अर्चयित्वा तु तां देवीं न दुर्गतिमवाप्नुयात् ॥ अत्र क्षेत्रे देवीसान्निध्यस्य तदर्शनतत्फलयोश्च वचनेन संभूय स्थितैर्नारायणादिभिर्देवैः सर्वैरन्वास्यमानस्य ब्रह्मणोऽवस्थानं देव्याराधनार्थमित्याशय उन्नीयते ॥ आनुशासनिके च । यस्य ब्रह्मा च विष्णुश्च त्वञ्च शक्र सहामरैः । अर्चयध्वं सदा लिङ्गं तस्मात्पूज्यतरो हि कः ॥ इत्युपमन्युवचनेन ब्रह्मविष्ण्वादीनां नित्यमेव शिवाराधकत्वमुक्तम् ॥ एवं सौप्तिकादिष्ववतार रूपस्य परवासुदेव रूपस्य श्रीकृष्णस्य शिवपूजनेन सकलवरलाभोक्त्या भारते साक्षात्प्रतिपादितनिरतिशयप्रभावशालिनः साक्षात्परब्रह्मेति संभाव्यमानात् ततोऽपि तत्पूज्यस्य शिवस्य यत्पारम्यं व्यञ्जनावृत्त्या प्रतीयते तदेव श्रीमहाभारतस्य वाच्यनारायणचरितद्वारा व्यज्यमानं श्रीमहाभारतस्य प्रधानं प्रतिपाद्यं ॥ श्रीमहाभारतं हि महदत्युत्कृष्टं काव्यं, कृतं मयेदं भगवन्काव्यं परममिति ब्रह्माणं प्रति व्यासवचनात्, ब्रह्मणा च "त्वया च काव्यमित्युक्तं तस्मात्काव्यं भविष्यतीत्युक्त्या काव्यस्य सतःकीदृक्काव्यत्वमाशास्यत इत्याकांक्षायां ॥ अस्य काव्यस्य कवयो नसमर्था विशेषणे । विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमा इति तदनन्तरमेतदतिशायि काव्यं कोपि न

करिष्यतीत्यस्यैव यत्सर्वातिशायिकाव्यत्वं तदाशास्यत इति विभावनाच्च । सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति । पर्जन्य इव भूतानामक्षयोभारतद्रुम इति, तदनन्तरं भारतस्य करिष्यमाणसर्वकाव्योपजीव्यत्ववचनाच्च । अस्योत्कृष्टस्यचोत्तमकाव्यस्य वाच्यातिशायि यद्व्यंग्यमस्ति तदेव प्रधानं,नतु वाच्यम् । यथाहुः "प्रतीयमानं वस्त्वस्ति वाणीषु महाकवीनां आभाति लावण्यमिवाङ्गनासु, इति । इहतुवाच्यः परब्रह्मत्वसंभावनावहोनारायणस्य निरतिशयमहिमा । तस्यापि पूज्यतया सर्वत्र निबद्धस्य शिवस्य महिमा, तदतिशायिसगुणपरब्रह्मभावरूपो महिमा व्यज्यमानः, अयमेव वस्तुध्वनिरूपः, सहितत्र व्यज्यमानैर्भावरसालङ्कारध्वनिभिरुपस्कृतः प्रधानतया प्रबन्धुराशयस्थित उन्नीयत इति भावः ॥ १ ॥

अथ विधान्तरेणापि भारते शिवस्य परब्रह्मभावमाविष्करोति मोहेति—

मोहाभिभूतमखिलं जगदाविरिञ्चं ।
त्वामेकमेव भगवन् रहितञ्च तेन ।

१ ब्रह्मपर्यन्तम् । २ मोहेन ॥

विख्याप्य मंकणकदिव्यकथानुषक्त्या ।
त्वां ब्रह्म तेने च मुनिः स्फुटयाम्बभूव ॥२॥

आरण्यपर्वणि तीर्थयात्राविधौ सप्तसारस्वततीर्थप्रसङ्गे यत्रमङ्कणकःसिद्ध इत्युपक्रम्य दर्भेक्षतात्तस्य करतः शाकरसस्रुतिमुक्त्वा पठितम् । सवै शाकरसं दृष्ट्वा हर्षाविष्टोमहातपाः । प्रनृत्तः किल विप्रर्षिर्विस्मयोत्फुल्ललोचनः ॥ ततस्तस्मिन् प्रनृत्ते वै स्थावरं जङ्गमं जगत् । प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ ब्रह्मादिभिः सुरैराजन्नृषिभिश्च तपोधनैः । विज्ञप्तोवै महातेजा ऋषेरर्थे नराधिप ॥ यथा न नृत्यते विप्रस्तथा त्वं कर्तुमर्हसि । ततःप्रनृत्तमासाद्य हर्षाविष्टेन चेतसा ॥ सुराणां हितकामार्थमृषिन्देवोऽभ्यभाषत । विभो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान् ॥ हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव । ऋषिः । किन्न पश्यसि मे देव कराच्छाकरसस्रुतिम् । यां दृष्ट्वाहं प्रनृत्तोवै हर्षेण महतान्वितः ॥ तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् । अहं वै विस्मयं विप्र दर्शयाम्यत्रपश्यमाम् ॥ एवमुक्त्वा नरश्रेष्ठ महादेवेन वै तदा । अङ्गुष्ठाग्रेण राजेन्द्र स्वाङ्गुलिस्ताडिताभवत् ॥ ततोभस्मक्षताद्राजन्निर्गतं हिमसन्निभम् ।

---

१ मोहाभावकारणेन । २ वेदव्यासः ॥

तद्दृष्ट्वा व्रीडितोराजन्समुनिःपादयोर्गतः, इति । अत्र ब्रह्मादिस्थावरान्तस्य सकलस्य जगतो मङ्कणकनृत्येन मोह उक्तः, मोहवन्मङ्कणकवद्वशान्नृत्यतां ब्रह्मादीनां प्रार्थनया शिवेन मङ्कणकनृत्यविरामः कारित इत्युक्त्या शिवस्य ब्रह्मादिवन्मोहोनास्तीति व्यञ्जितम् । अन्यथा स्वयन्ततोमोहवशंगतस्य तद्विरामकरणसामर्थ्याऽसंभवेन शिवं प्रति देवानां तद्विरामकरणप्रार्थनाऽनुपपत्तेः,देवाः सर्वे मोहवशङ्गताः ब्रह्मैकं मोहानभिभूतमिति सर्वं संप्रतिपन्नम् । अतोमोहतदभावकृताद्विशेषाद्देवाः सर्वे जीवाः । शिव एव परंब्रह्मेति वेदव्यासोविभावयामासेत्यर्थः ॥ २ ॥

अत्र स्वदृढगमकत्वेन तद्वाक्यशेषलब्धमर्थं गृह्णाति तस्मादिति—

तस्माच्च मोहतदभावकृताद्विशेषात् ।
जन्मस्थितिप्रलयभागखिलं त्वदन्यत्[1] ।
तत्कर्तृवस्तु[2] परमं[3] त्वामिति प्रबोधम् ।
जातं विभावयति तस्य तदीयवाचा[4] ॥ ३ ॥

शिवस्य पादयोः प्रणिपातानन्तरमिदं मंकणवचनं

---

१ त्वत्तोऽन्यदखिलं जगत् । २ जगत्कारणं वस्तु ।
३ परंब्रह्म । ४ मङ्कणकमुनिवचनेन ॥

पठितम् । नान्यं देवमहं मन्ये रुद्रात्परतरं महत् । सुरासुरस्य जगतोगतिस्त्वमसि शूलधृत् ॥ त्वया सृष्ट मिदं सर्वं त्रैलोक्यं सचराचरम् । त्वामेव भगवन्सर्वे प्रविशन्ति युगक्षये॥ देवैरपि न शक्यंते परं ज्ञातुं कुतोमया । त्वयि सर्वेपि दृश्यन्ते सुराब्रह्मादयोऽनघ । सर्वस्त्वमसि लोकानां कर्ता कारयिता चह । त्वत्प्रसादात्सुराः सर्वे निवसन्त्यकुतो भया इति ॥ अत्र शिवस्य सकलजगत्सर्गप्रलयावधिसार्वात्म्याद्युक्त्या शिव एव परं ब्रह्मेति निश्चिकाय मङ्कणक इत्युन्नीयते, तन्निश्चयश्च न भस्मनिर्गमनकृतः, शाकरसनिर्गमनवद्विस्मयहेत्वार्ष वृत्तत्वेनान्यथासिद्धेः। किन्तु मम नृत्तन्दृष्ट्वा सर्वस्मिन्नपि जगति आहिरण्यगर्भं मोहिते नृत्यत्यपि शिवोमोहराहित्यान्नृत्यरहित एव स्वयं मत्समीपमागत्य मन्नृत्योपरतिमचीकरदित्येवं शिवस्य मोहाभावनिश्चय कृतः । अतो मंकणकवचनमुखेनापि शिव एव परं ब्रह्मेति विभावयामासेत्यर्थः । अत्र पूर्वश्लोकप्रकृतो मुनिः कर्ता ॥ ३ ॥

एवं मंकणककथोदाहरणेन शिवस्य परब्रह्मभावाभिव्यक्तिराविष्कृता, क्वचित्कृष्णवृत्तान्तोदाहरणेनापि तामाविष्करोति कैलासेति—

कैलासशैलशिखरे हरिपार्थदृष्टम्[1] ।
त्वां ब्रह्म नाथ परमं समुदीर्य साक्षात् ।
तल्लक्षणं[1] त्वयै[2]मनै[3]न्यतदीयधर्म ।
क्रांते कियच्च भवति स्फुटमाचचक्षे ॥ ४ ॥

कृष्णार्जुनौ पाशुपतास्त्रसंधानप्रकारविशेषाभिज्ञानाय यदा कैलासंगतौ तदा तन्महिमवर्णनमेवं कविना कृतम्। स्तूयमानं स्तवैर्दिव्यै ऋषिभिर्ब्रह्मवादिभिः। गोप्तारं सर्वलोकानामिष्ट्वा स परमच्युतम्॥ वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम्। पार्थेन सह धर्मात्मा गृणन्ब्रह्मसनातनम्॥ लोकादिं विश्वकर्माणमृषिमीशानमव्ययम्। तमसः परमं ज्योतिः खवायुर्ज्योतिषां गतिम्॥ स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पराम्। देवदानवयक्षाणां मनुष्याणां च शासकम्॥ योगिनां परमं ब्रह्म व्यक्तं वेदविदां निधिम्। परावरस्य स्रष्टारं प्रतिहर्तारमेव च॥ कालकेयं महात्मानं शक्रसूर्यगुणोदयम्। ववन्दतुस्तदा कृष्णौ वाङ्मनो बुद्धिकर्मभिः॥ यं प्रपश्यन्ति विद्वांसः सूक्ष्माऽध्यात्मनिदर्शनात्। तमजं कारणात्मानं जग्मतुः शरणं भवमिति॥ अत्र योगिनां

---

१ कृष्णार्जुनाभ्यां दृष्टम्। २ ब्रह्मलक्षणम्। ३ वेदव्यासः।
४ अन्यत्राऽसंभाव्यमानब्रह्मधर्माक्रान्ते॥

परमं ब्रह्मेति कण्ठतः शिवस्य परब्रह्मभाव उक्तः । तदुपासनार्थं परमानन्दरूपत्वं ब्रह्मणः स्वरूपलक्षणं तत्र व्यक्तं वेदविदां निधिमित्यनेन दर्शितम् । अति दरिद्रस्य पुरस्तादकस्मादाविर्भावो हि महान्निधिस्सा-क्षात्कृतस्य निरतिशयब्रह्मानन्दस्योपमानतया वक्तुमु-चितः, वस्तुतस्तस्य निधेरुपमेयापेक्षया हीनत्वेपि लोक दृष्ट्या तदपेक्षया अधिकाभावात् । आकाशवत्सर्व-गतश्च नित्य इतिवदुपमानतया निवेशनं युक्तमिति तदात्मतया ब्रह्मानन्दस्य निरूपणम् । तमसः परमं ज्योतिरिति श्लोकेन नित्यमुक्तस्वरूपब्रह्मधर्मप्रदर्शन पूर्वकं "आत्मन आकाश इत्यादि श्रुतिसिद्धं वियदादि कारणत्वरूपं तटस्थलक्षणं तत्र दर्शितम् । अन्ये चाऽ-ध्यात्मविद्दृश्यमानत्वगोप्तृत्वशासकत्वादयः परब्रह्म धर्मा वर्णिताः । ब्रह्मसनातनमिति शिव एवोक्तः । यद्वा प्रणवः, उभयथापि परब्रह्मरूपत्वं तद्धर्मः प्रण-वार्थत्वं वा तेन दर्शितम् ॥ ४ ॥

अथ प्रदेशांतरेपि कृष्णावृत्तांतेन तदभिव्यक्ति माविष्करोति नारायणस्येति—

नारायणस्य सुचिरं त्वदुपासकस्य ।
यद्ब्रह्मभावमवदत्तवभावनात्तम् ।

यत्ते स्तुतिन्तदुदितां परभावगर्भाम् ।
त्वां ब्रह्म तेन च मुनिःस्फुटयाञ्चकार ॥ ५ ॥

द्रोणपर्वणि नारायणस्य मैनाके तपश्चर्योक्ता, "ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः । षष्टिवर्षसहस्राणि तावन्त्येव शतानि च ॥ व्यशोषयत्तदात्मानं वायुभक्षोम्बुजेक्षणः । अथापरं तपस्तप्त्वा द्विस्ततोन्यत्पुनर्महत् ॥ द्यावापृथिव्योर्विवरं तेजसा समपूरयत् । स तेन तपसा तत्र ब्रह्मभूतोयथाऽभवेदिति ॥ अत्र तपश्चर्याकाले शिवं ध्यायतोनारायणस्य शिवाहंभावभावनाभावितः शिवभाव एव ब्रह्मभूत इत्यनेनोक्तः । ततोन्यस्य तेन प्राप्यस्य ब्रह्मभावस्याऽभावात्, अत एव तपसा प्रसन्ने शिवे प्रत्यक्षे सति नारायणेन बहुधा परब्रह्मधर्मैः स्तवः कृतः । स जानुभ्यां महीं गत्वा कृत्वा शिरसि चाञ्जलिम् । पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ॥ त्वद्भूता वै भूतकृतोवरेण्य गोप्तारोये भुवनस्याऽस्य गोपाः । प्रविश्येमां धरणीं ये ह्यरक्षन् पुरा पुराणी तव देव सृष्टिः । शक्त्या लोका यांति यथा पृथक्त्वं ताभिश्चैक्यं संक्षये यान्ति भूयः ।

१ नारायणोदिताम् । २ परब्रह्मभावार्थपूर्णाम् । ३ कारणेन ।
४ बादरायणः ॥

एवं विद्वान्प्रभवञ्चाव्ययञ्च त्वत्संभूतं तव सायुज्यमेति। भूतं भव्यं भावि यच्चाप्यऽदृष्टं त्वत्संभूताः सप्त इमे हि लोकाः ॥ भक्तञ्च मां भजमानं भजस्व प्रीत्या मां वै लोकपितर्महेश, इति । एवं नारायणं शिवाहंभावभावनाभावितशिवभावं व्यञ्जितवानित्यर्थः ॥ ५ ॥

अथ शिवे निरुपपदब्रह्मपदप्रयोगकृतान्तस्य परब्रह्मभावाभिव्यक्तिमाविष्करोति मूलमिति—

मूलं कृष्णोब्रह्मच ब्राह्मणाश्चे ।
त्यादावेवं ब्रह्मभावं महेश ।
पार्थानान्ते नित्यसंरक्षकस्य ।
व्यासस्तत्रोद्घाटयामास शंभो ॥ ६ ॥

भारतोपक्रमे "युधिष्ठिरोधर्ममयोमहाद्रुमः स्कन्धोऽर्जुनोभीमसेनोऽस्य शाखा । माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्मच ब्राह्मणाश्च, इति । युधिष्ठिरस्य द्रुमत्वरूपणे कृष्णवद्ब्राह्मणवच्च ब्रह्मपदेनोक्तः कश्चिन्मूलत्वेन निरूपितः, कृष्णस्य ब्राह्मणानांच मूलत्वनिरूपणे युधिष्ठिरराजभावहेतुत्वं निमित्तम्, तच्च सर्वविधसाहाय्यकादिना तदीयराज्यप्राप्तिहेतोः

१ अत्रब्रह्मशब्दवाच्यः शिवइतिज्ञेयः । २ युधिष्ठिरादीनाम् ॥

श्रीकृष्णस्य सुप्रसिद्धमेव । ब्राह्मणानान्तु जयाशिषा तत्प्रसिद्धम् । आरण्यपर्वण्यरण्यंप्रस्थिते युधिष्ठिरे तमनुव्रजतः अग्निहोत्रादिसहितान् भोजयितुमशक्त्या निवर्तध्वमिति तेन प्रार्थितानां ब्राह्मणानां । स्वयमाहृत्य वन्यानि अनुयास्यामहे वयम् । अनुध्यानेन जप्येन विधास्यामः शिवन्तवेति वचनेन तथैवानुव्रजनेन पश्चादादित्यात्ताम्रपात्रं लब्ध्वा तत्रापाकतः समृद्धमन्नं प्रतिलभ्य तेषां सर्वेषां भरणवचनेन प्रीयमाणानां तज्जयमाशासानानां तेषां । ब्राह्मणानां सहस्राणि स्नातकानां महात्मनां । दशमोक्षविदां तद्वद्यान् विभर्ति युधिष्ठिर इति, तदुपरितनाध्यायान्तरगत संख्यावचनेन व्यक्तीकृतमेतत् ॥ एवमेव ब्रह्मपदोक्तेनापि ब्रह्मपदार्हेण तद्राज्यप्राप्तिकारिणा भवितव्यम्, वेदतपसी यद्यपि राज्यप्राप्तिहेतुधर्मानुष्ठानप्रमिति द्वारेण अपूर्वद्वारेण च तद्राज्यप्राप्तिकारिणी । तथापि चेतनमध्यपाठोनाचेतनयोर्युक्तः, प्रायपाठविरोधात् । अतस्तत्र शिवएव ब्रह्मपदेनोक्तो ज्ञायते, तस्य हीतरापेक्षयाऽप्यधिकं सकलशत्रुवधद्वारा तदीयराज्यप्राप्तिहेतुत्वं भारत एवारण्यपर्वणि किराताज्र्जुनीये, द्रोणपर्वणि कैलासगमने, तत्रैव शतरुद्रीये, सौप्तिके पर्वणि, शान्तिपर्वणि, आश्वमेधिकपर्वणि, अन्यत्रापि

तत्र तत्र च सुप्रसिद्धम्, तानि च वचनानि ब्रह्मतर्कस्तवविवरणे समुदाहृतानि द्रष्टव्यानि, एतेन ब्रह्मचेति कृष्णस्यैव विशेषणमस्त्वित्याशङ्कापि निरस्ता, कृष्णादप्यधिकतरं पाण्डवसंरक्षकस्य शिवस्य मूलत्वनिरूपणे ग्रहणावश्यं भावात् ॥ ६ ॥

अथ शिवस्य ब्रह्मविष्ण्वादिसृष्टिप्रलयकर्तृत्ववचनैरपि तस्य परब्रह्मभावाभिव्यक्तिमाविष्करोति ब्रह्मेति—

ब्रह्मा विष्णुः शंकरश्चेति देवाः ।
कर्तारोये सर्गरक्षालयानाम् ।
तेषां सृष्टिं संहृतिञ्च त्वदिच्छा ।
धीनामूचे द्योतयन्ब्रह्म तत्त्वाम् ॥ ७ ॥

शिवस्य त्रिमूर्तिस्रष्टृत्वमानुशासनिके प्रतिपादितम् । सएष भगवानीशः सर्वतत्वादिरव्ययः । सर्वतत्वविधानज्ञः प्रधानपुरुषेश्वरः । सोसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसंभवम् । वामपार्श्वात्तथाविष्णुं लोकरक्षार्थमीश्वरः ॥ युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथासृजदिति ॥ किञ्च तेषामापन्निवारणादिना शिवस्य तत्संरक्षकत्वं शान्तिपर्वणि प्रतिपादितम् । यं

१ सृष्टिस्थितिप्रलयानाम् । २ ब्रह्मादीनाम् ॥

विष्णुरिन्द्रः शंभुश्च ब्रह्मा लोकपितामहः। स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम्॥ तमर्च्चयन्ति ये शश्वत् दुर्गाण्यतितरन्तित इति॥ अत्र शिवाराधनस्य दुर्गातितरणोपायत्वोक्त्या विष्ण्वादीनां स्तोत्रमपि तदर्थमित्यवसायात्, स्तुतिभिः प्रीतस्य तस्य शिवस्य तत्संरक्षकत्वं विवक्षितमित्यवसीयते॥ शिवस्य तत्संहर्तृत्वमपि शान्तिपर्वण्युक्तम्, "ईश्वरश्चेतनः कर्ता पुरुषःकारणं शिवः। विष्णुर्ब्रह्माशशीसूर्यः शक्रो देवाश्च सान्वयाः॥ सृज्यते ग्रस्यते चैव तमोभूतमिदं यदा। अप्रज्ञातं जगत्सर्वं तदा ह्येको महेश्वर इति॥ अत्र संहाररुद्रस्यापि ग्रासो विवक्षितः, तदाह्येको महेश्वर इति वाक्यशेषात्। मूलश्लोके सृष्टिं संहृतिञ्चेति चकारेण रक्षा सूचिता। एवं ब्रह्मविष्णुरुद्राणामपि सृष्टिस्थितिप्रलयकर्ता कैमुतिकन्यायेन सर्वस्य जगतस्तत्कर्तेति सिद्धेः, तत् "यतो वा इमानि भूतानीत्यादिलक्षणलक्षितं ब्रह्म शिव एवेत्यर्थात्सिद्ध्यतीति तद्द्योतनार्थं तदुक्तवानित्यर्थः। द्योतयन्निति हेतौ शतृप्रत्ययः॥ ७॥

ननु भारते क्वचित्क्वचिच्छिवस्य विरिञ्चान्नारायणाच्चापकर्षोऽपि प्रतिपादितो दृश्यते कथं तदुपपत्तिरित्याशंक्याह विशालाक्ष इति—

विशालाक्षः[1]स्थाणुर्द्रुहिणतनयः संहरणकृत् ।
स[2]रोजाक्षक्रोधप्रभव इति वैशेषिकपदम् ।
वि[3]भूतित्वज्ज्ञप्त्यै किमपि न हितन्नाथ नियतं ।
निकर्षोक्तिस्ताभ्यां भवतइतिबुद्धिं निरासितुम् ८

संति त्रिमूर्तिकारणस्य मायाधिष्ठातृसगुणब्रह्मरूपस्य श्रीसाम्बशिवस्य विभूतिविशेषरूपा रुद्राः, यथा संहाररुद्रो लोकसृष्ट्यर्थं लोकरक्षार्थंच विरिञ्चात्स्वेच्छया प्रादुर्भूतस्तदवताररूपः । अवान्तरकल्पेषु संहारार्थं हरिक्रोधात्स्वेच्छया प्रादुर्भूतश्च तदवतार रूपोरुद्रः । अन्येच नीललोहितो लोकपाल इत्यादयो रुद्राः । अत्र ब्रह्माङ्गसंभूतोरुद्रोमहाभारते दर्शितः । अनादिनिधनोदेवश्चैतन्यादिसमन्वितः । ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥ अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् । सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः, इति ॥ हरिक्रोधप्रभवःकौर्मे शिववचनेन दर्शितः । अहं च भवतोवक्त्रात् कल्पांते घोररूपधृत् । शूलपाणिर्भविष्यामि क्रोधजस्तवपुत्रकः, इति ॥ नीललोहितनामा कश्चिद्रुद्रो महाभारते कृष्णार्जुनयोः कैलासगमनप्रस्तावे कैलासे शिवपार्श्वे

१ ब्रह्मपुत्रः । २ विष्णुक्रोधजः । ३ त्वदीयविभूतिज्ञापनाय ॥

स्थितो वर्णितः । ततःपार्श्वे वृषांकस्य ब्रह्मचारी व्यव-
र्द्धत । पिङ्गाक्षस्तपसा श्रेष्ठोबलवान्नीललोहितः, इति ॥
लोकपालरुद्रः प्रागुदीच्यां दिशि वसन् कौर्मपुराणे
दर्शितः । तत्रेशानस्य भवनं रुद्रस्याष्टतनोः शुभम् ।
गणेश्वरस्य विपुलं तत्रास्ते स गणैर्वृतः, इति ॥ एतेषु
ब्रह्माङ्गभवस्य रुद्रस्य स्थाणुर्विशालाक्ष इति वैशे-
षिकनामनी । तत्र ब्रह्मणा सृष्ट्यर्थं नियुक्तस्य जरा-
मरणरहितान्स्वात्मतुल्यान् असंख्यातान् रुद्रान् सृष्ट-
वतो जरामरणयुक्तान् सृजेति ब्रह्मणोवचनंश्रुत्वा नैवं
विधविशेषसृष्टिर्मया क्रियत इत्युक्तवतः तदनन्तरं
ब्रह्मणा सृष्टिव्यापाराद्व्यावर्त्तितस्य निर्व्यापारतयाव-
स्थानं स्थाणुशब्दप्रवृत्तौ निमित्तं पुराणेषु दर्शितम् ।
स्वात्मजैरेव तैरुद्रैर्निवृत्तात्मा ह्यतिष्ठत । स्थाणुत्वं तेन
तस्यासीद्देवदेवस्य शूलिनः ॥ ततः प्रभृति विश्वात्मा
न प्रसूते शुभाःप्रजाः । स्थाणुवन्निश्चलो यस्मात्स्थितः
स्थाणुरतःस्मृतः, इति ॥ एतस्य विशालाक्ष इति नामतु
महाभारत एव राजधर्मे ब्रह्मप्रणीतं नीतिशास्त्रं प्रस्तुत्य
"ततस्तांभगवान्नीतिं पूर्वं जग्राह शंकरः । बहुरूपोवि-
शालाक्षः शिवः स्थाणुरुमापतिः ॥ स एव सर्वभूतात्मा
महादेवः सनातनः । असंख्यातसहस्राणां रुद्राणां स्था
नमव्ययम् ॥ युगानामायुषोह्रासं विज्ञाय भगवाञ्छि-

वः । संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥ वैशालाक्षमितिप्रोक्तं तदिन्द्रः प्रतिपद्यत, इति । स्था णुशब्दिते तस्मिन्विशालाक्षपदप्रयोगेण तत्कृते नीति शास्त्रे वैशालाक्षनामकीर्तनेन च महाभारत एव तस्य शिवोपासकेषु शिवनियम्येषु च परिगणनेन व्यावर्तिता, तत्र सभापर्वणि, भीष्मपर्वणि च। यत्र भूतानि संसृष्टा सर्वलोकमहेश्वरः । उपास्यते तिग्मतेजा वृतोभूतैः सहस्रशः, इत्युपास्यस्य शिवस्य मैनाके सन्निधानमुक्त्वा, "नरनारायणौ ब्रह्मा यमस्थाणुश्च पञ्चमः । उपासते यत्र परं सहस्रयुगपर्य्यये, इति, तदुपासकेषु परिगणनं कृतम् । राजधर्मे । भूयः स भगवान् ध्यात्वा चिरं शूलवरायुधः । तस्यतस्य निकायस्य चकारैकैक मीश्वरम् ॥ देवानामधिपं चक्रे देवं दशशतेक्षणम् । इत्युपक्रम्य । रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः । महादेवं महात्मानं विशालाक्षं सनातनम् ॥ इति, शिवनियम्येषु परिगणनं कृतम्। एवं च सृष्ट्यर्थं ब्रह्मललाटादुत्थितं तमभिप्रेत्य "ब्रह्मा सुरगुरुःस्थाणु र्मनुश्च परमेष्ठिजः। इत्यारभ्य "एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः। इति, प्रजापतिषु परिगणनं कृतम्। तस्यैवच ब्रह्मसभायां तदुपसर्ज्जनतयाऽवस्थानमादि पर्वण्युक्तं, तत्र हि "तत्र विष्णुर्महादेवस्तत्राग्निर्वा-

युनासह । ऋषयस्सर्व एवैते पितामहमुपासते ॥ इत्युक्तम् । तदपिस्थाणुविषयमिति तत्रैव ब्रह्मसदसि- देवान् प्रदक्षिणीकुर्वाणां तिलोत्तमां परितोद्रष्टुं तेन मुखचतुष्टयं सृष्टमित्यग्रिमवचने स्थाणुशब्देनैव स्प- ष्टीकृतम् । एवञ्चतुर्म्मुखःस्थाणुर्महादेवोभवत्पुरा । इति । यत्तु द्रोणपर्वणि ब्रह्माणं प्रति शिववचनम्, "भवताहि नियुक्तोहं प्रजानां परिपालनइत्यादि,तदपि- स्थाणुविषयमित्येतत् "ततोहरोजटीस्थाणुरित्युपक्रमे- ण प्रकाशितं मोक्षधर्मेषु।एतौ द्वौ विबुधश्रेष्ठौ प्रसाद क्रोधजौ मम। मया दर्शितपन्थानौ सृष्टिसंहारकारकौ। इत्यादि नारायणवचने शिवस्य तन्नियम्यत्ववचनमपि विभूति विषयमित्येतत् क्रोधजत्वविशेषणेन दर्शितम्। एवमन्यत्रापि तत्र तत्र निकर्षवचने विभूतिविषयत्व- ज्ञापकब्रह्मपुत्रत्वादिविशेषणं प्रयुक्तं द्रष्टव्यं । एवं भारते क्वचित्क्वचित् शिवनिकर्षवचनानां तद्विभूति विषयत्वस्य तत्र तत्र प्रयुक्तैर्वैशेषिकपदैः सूचितत्वा न्नकश्चिद्विरोध इति ॥ ८ ॥

यत्रतु क्वचित्क्वचिदेतादृशं वैशेषिकपदं नास्ति, यथा पञ्चेन्द्रोपाख्याने पञ्चेन्द्रान् असुरावताररूप कर्णदुर्योधनादिवधार्थं मनुष्यलोके जायध्वमिति नि-

युक्तवतः शिवस्य नारायणोप्यंशेनावतीर्य तेषां साहाय्यकं करोत्वित्यभिप्रायेण नारायणोपसर्पणमुक्तम्, एवमादिषु गतिमाह यत्रेति—

यत्रेदृशं नास्ति विभूति रुद्रता ।
विज्ञापकं नाथ विशेषिकं पदम् ।
सापि स्वधर्मग्रहमानवैशसा ।
सर्वेश्वरं त्वां न निकर्षगीः स्पृशेत् ॥ ९ ॥

श्रीमहाभारते खलु श्रीसांबशिवस्त्रिमूर्त्यूत्तीर्णस्त्रिमूर्त्यादेः कृत्स्नस्यापि चराचरस्य प्रपंचस्य स्त्रष्टा पाता नियन्ता संहर्ता समाराधनीयश्च प्रतिपन्नः ॥ भारत शेषे हरिवंशेच शकटपरिवृत्या भीतेन नन्दगोपेन कृष्णरक्षायै प्रयुक्ते कवचे "विष्णुस्ते पूर्वतः पातु रुद्रो रक्षतु दक्षिणम् । ब्रह्माच पश्चिमं पायात् स्कन्दोरक्षत्वथोत्तरम् ॥ उपरिष्टात्तथा सूर्यः पात्वधश्चापि वासुकिः । पायाच्चत्वामथोवत्स शिष्टाः काष्ठाःसमीरणः । स्वस्तिं करोतु भगवान् पिनाकी वृषभध्वजः । गावोरक्षन्तु सर्वत्र भूमिंपातु सदाशिवः । इति ब्रह्म विष्णुरुद्रेभ्यः शिवः पर इति प्रतिपादितः, तथाभूतं निकर्षगीः कापि नस्पृशेत्, किन्तु बहुषु निकर्षवचनेषु

१ विशालाक्ष इत्यादि । २ निकृष्टोक्तिः ॥

विभूतिविषयत्वज्ञापकस्थाणुविशालाक्षादिशब्दसत्वा दौचित्याच्च तत्तद्विभूतिविशेषानेवावलंबत इत्यर्थः ॥९॥

ननु गीतासु श्रीकृष्णेन स्वस्यैव परब्रह्मभावचिन्ह-मधिकं माहात्म्यं बहुधा प्रपंचितम्, तद्विरोधपरिहारः कथमित्याकांक्षायामाह गीतास्विति—

गीतासु गूढमुदितं भवतः परत्वं[1] ।
नैवस्फुटन्तदत[2]एव हि सव्यसाची ।
गीतार्थमेव सहसा पुनरप्यपृच्छत् ।
तद्[3]बोधनार्थमुदिता हरिणाऽनुगीता ॥१०॥

आश्वमेधिके पर्वणि अनुगीतोपक्रमे । विदितन्ते महाबाहो संग्रामे समुपस्थिते । माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम् ॥ यत्तु तद्भवता प्रोक्तं तदाकेशव सौहृदात् । तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः ॥ मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः । भवांश्च द्वारकांगन्ता न चिरादेव केशव ॥ इत्यर्जुनस्य प्रश्ने भगवताऽनुगीतोपदेशः कृतः, तस्यायमनुवादः ॥ १० ॥

ननु गीतासु श्रीकृष्णेन शिवस्य पारम्यं प्रतिपादितं, तदनन्तरं सम्यगर्जुनेन गृहीतमिति पुनस्तद्विषयः

---

१ परब्रह्मरूपत्वं । २ अस्फुटत्वादेव । ३ भवतः परत्वावबोधनार्थं ॥

प्रश्नोयमित्युदाहृतप्रश्नाभिप्रायकथनं पूर्वश्लोक कृतं न युज्यते । अर्जुनेन हि, युद्धारंभसमये त्वयोपदिष्टं तव माहात्म्यं तदा विदितमिति खलु प्रश्नोपक्रमे पार्थेनोक्ता तद्विस्मृतमिति श्रीकृष्णं प्रति पुनः पृष्टमित्याशंक्य पार्थस्य गीताश्रवणसमये संशयहेतुमुद्घाट्य स्वाभिमतं प्रश्नाभिप्रायमाविष्करोति तमेवेति—

तमेव चाद्यं पुरुषं प्रपद्य इ ।
त्युदीरितं यन्मधुकैटभद्विषा ।
तमेव सर्वान्भ्रमयन्तमीश्वरं ।
महाफलाप्त्यै शरणं व्रजेतियत् ॥ ११ ॥

एतेन कृष्णस्य समं मुमुक्षुणा ।
स्वाराधनीयः प्रतिभासते परः ॥
सर्वस्यचाहं हृदि सन्निविष्ट इ ।
त्याद्यैस्तु विष्णुस्तदुदेति संशयः ॥ १२ ॥

गीतासु । ततःपदं तत्परिमार्गितव्यं यस्मिन्गता ननिवर्तंति भूयः । तमेवचाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी, इति, श्रीकृष्णवचनं दृश्यत्ते । अत्र

१ शिवम् । २ श्रीकृष्णेन । ३ मोक्षप्राप्त्यै ॥

४ कारणेन । ५ शंभुः । ६ कृष्णः । ७ तस्मादुत्पद्यते संशयः ॥

उत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः । योलोकत्रय-
माविश्य बिभर्त्यव्यय ईश्वरः, इति प्राज्ञ ईश्वरः पुरुष
इत्युक्तः सर्वस्य प्रपदनीय इत्युक्तमिति प्रतीयते, तमेव
मया शरणीकृतमीश्वरं त्वमपिशरणं भजेत्येवमर्ज्जुनं
प्रति । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रा-
मयन्सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं
गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं
प्राप्स्यसि शाश्वतम् । इत्यनेनोपदिष्टमिति प्रतीयते ।
यस्मिन्गता न निवर्तन्ति भूयः ॥ स्थानं प्राप्स्यसि शा-
श्वतमिति फलोपदेशात् । उत्तमः पुरुषस्त्वन्य इति
श्लोके समानाधिकरणयोः, शब्दयोः एकत्र पुरुषशब्दोऽ
न्यत्रेश्वरशब्द इति, अनयोरैकार्थ्यप्रतीतेश्च । एवं ताव-
त्कृष्णेन गीतासु निरतिशयमहिमाशालितयोक्तस्य स्व-
स्यापि प्रपदनीयत्वेन वर्णितः "शिष्यस्तेहंशाधिमामि-
त्युक्तवन्तमर्ज्जुनं प्रत्यपि मोक्षार्थं प्रपदनीयत्वेनोपदि-
ष्टः, ईश्वरनाम्ना पुरुषान्तरस्पर्शरहितेन धिया मानितः
शिवएव परंब्रह्मेति विवक्षितः प्रतीयते, गीतासु कृष्णेन
सर्वकारणत्वसर्वान्तर्यामित्वादीनि बहूनि ब्रह्मलिङ्गानि
स्वस्मिन्वर्णितानीति स्वयमेव परंब्रह्मेत्युपदिष्टः, एवं
कोटिद्वयोत्थानात्संशय एवात्रोचितः ॥ नचकृत्स्नगीता
श्रवणानन्तरं "स्थितोऽस्मि गतसन्देहः करिष्ये वचनन्त-

वेत्युक्तवतोऽर्ज्जुनस्य कथं संशय उच्यत इत्याशंकनीयम्। तस्य स्वकीयैर्युद्धं कर्तुमुचितमनुचितं वेतिसन्देहनिवृत्त्या युद्धं करिष्य इत्येतदर्थकत्वात्, अन्यथा सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति कृष्णवाक्यसमनन्तरमेव । स्थितोऽस्मि गतसन्देहः करिष्ये वचनन्तवेत्युक्त्यनन्तरमप्यर्ज्जुनस्य यावज्जीवं शिवपूजानिष्ठत्वात्। एवं च अनुगीतारम्भगताऽर्ज्जुनप्रश्नोपक्रमे, "विदितन्ते महाबाहो संग्रामे समुपस्थिते। माहात्म्यं देवकीपुत्र तच्चते रूपमैश्वरमिति गीतोपदेशेन कृष्णस्य परभावरूपं माहात्म्यं विदितमिति यदुक्तं, तत्तदा नगृहीतमिति गुरुं प्रत्यभियोक्तुं पुनः प्रश्नावतरणार्थमगृहीतमेव विस्मृतमिति नष्टशब्देनोक्तमितियोजनीयमितिभावः ॥ १२॥

गीतोपदिष्टार्थनिश्चयः प्रागर्ज्जुनस्य नासीदित्येतत्, उदाहृतप्रश्नोत्तरेण श्रीकृष्णवाक्येनाप्यवसीयत इत्याह इत्थमिति ॥

इत्थमस्य यदि संशयोभवे ।
दन्यथाग्रहणमेव वा पुनः ॥
नाग्रहीन्मदुपदिष्टमेष इ ।
त्यग्रहं हरिरवोचदुत्तरे ॥ १३ ॥

१ पूर्वोदाहृतप्रश्नोत्तरे ॥

इत्थं हि तत्रोत्तरारंभः॥ श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्। धर्मस्वरूपिणं पार्थ सर्वान् लोकांश्च शाश्वतान् ॥ अबुध्या यन्न गृह्णीथास्तन्मे सुमहदप्रियम् ॥ नूनमश्रद्दधानोसि दुर्मेधश्चासि पांडव। सहि- धर्मः सुपर्य्याप्तोब्रह्मणः पदवेदन इति । अत्र गृहीतं नष्टमित्यर्ज्जुनस्य वाचा गृहीतत्वविस्मृतत्वोक्तिं श्रुत्वापि यत् "अबुध्या यन्न गृह्णीथा इति कृष्णेन तस्याऽग्रहणमेवोक्तं, तस्यायमभिप्रायः, गीतोपदिष्टमर्थरहस्यं तदा ग्रहीतुमशक्त एव स्वस्मिन्नुपदेशायोग्यत्वप्रतीतिर्भवेदिति भीत्या विदितमित्युक्त्वा पुनः प्रश्नावसरार्थं नष्टमित्याह, तस्य यदि संशयः, यदिवा मामेवाहं परंब्रह्मोपदिशामीति तस्य मतिः, उभयथापि मदुपदिष्टार्थतत्वग्रहणं नास्तीति ॥ तत्र च युद्धारम्भवैयग्र कृताबुध्यैकाग्राभावोमूलम्, तदभावेच सर्वधूर्वहे श्रीकृष्णे स्थिते मम किमर्थं वैयग्रमिति तद्वैयग्रविरोधि श्रीकृष्णविषयविश्वासरूपश्रद्धाभावः स्वयमेव सर्वधूर्वह इति दुरहंकारकृता दुर्बुद्धिश्चमूलम् ॥ १३ ॥

एवमितः पुनरुपदेक्ष्यमाणार्थेपि तस्याग्रहणं माभूदिति कोपमभिनीय तस्य सुखबोधनार्थं चातुर्य्यशालिन्यैवोक्तिभङ्ग्या गीतोपदिष्टः सर्वोपि परब्रह्मभा-

वाऽऽवेदको महिमा न मदीय उक्तः, किन्तु मया यः शरणीकृतो मदुपास्यश्च तदीय इति कृष्णेन व्यञ्जितमित्याह उक्त्वा चेति—

उक्त्वा च संशयविपर्य्ययर्योर्निरासं ।
चक्रे हरिश्चतुरया द्रुतमुक्तिभङ्ग्या ।
शक्यं [1]तदद्य[2] न मया [3]भणितुं [4]यथोक्तं ।
[5]योगाधिरूढमनसा न बहिर्दृशेति ॥ १४ ॥

सहि धर्मः सुपर्य्याप्तो ब्रह्मणः पदवेदने, इत्येतत्पर्य्यन्तोक्त्यनन्तरं कृष्णस्येदं वचनं "न शक्यन्तन्मयाभूयस्तथावक्तुमशेषतः ॥ परं हि धर्मं कथितं योगयुक्तेन तन्मया, इति ॥ अत्र योगारूढेन अबहिर्मनसा मया तदा तदुक्तं। इदानीं बहिर्मनसा मया वक्तुं नशक्यमित्युक्तिभङ्ग्या गीतोपदिष्टः सकलोपि महिमा न स्वकीयः, किन्त्वन्यदीय इति स्पष्टीकृतम् । स्वयमेव नित्यसर्वज्ञं परं ब्रह्मेति कथने योगयत्नानपेक्षणात् ॥ योगयुक्त्वोक्त्यैव योगमार्गेण शिवाहंभावमास्थाय तदीयः सर्वोपि महिमा मदीयत्वेनोक्त इत्यपि व्यञ्जितम् ॥ नबहिर्दृशेति नशब्देन समासः ॥ १४ ॥

---

१ यत् गीताशास्त्रं पूर्वमुक्तं तत् । २ इदानीम् । ३ वक्तुम् । ४ यथा मया पूर्वमुक्तं तथा । ५ शिवाहंभावभावनाभावितेन मनसा ॥

एवं योगं विना वक्तुं न शक्यमित्युक्त्यनन्तरमपि सौहृदस्मरणात्पुनरप्युपदेशेनास्य संशयादिकं सम्यङ्गिरसनीयमित्यालोच्य केनचित् सिद्धपुरुषेण काश्यपाय प्राक् तुभ्यं मदुक्तार्थ एवोपदिष्टः, स मया श्रुतः, तमहं वक्ष्यामीति प्रतिज्ञाय काश्यपसिद्धपुरुषसंवादरूपेतिहासेन वैराग्यार्थं पूर्वदेहपरित्यागदेहान्तरपरिग्रहप्रकारं, इह परत्र च संसारिणो दुःखबाहुल्यं, वैराग्यदृढीकरणार्थभावनाविशेषान्, विरक्तस्य संसारान्मोक्षोपाय योगञ्चोपदिश्य, "कच्चिदेतत्त्वया पार्थ श्रुतमेकाग्रचेतसा ॥ न तथापि रथस्थः किं श्रुतवानेतदेव हि, इति, भगवानुपसञ्जहार, तदर्थं संगृह्णाति अधुनेति ॥

अधुना तदुपास्यसंशया ।
व्यपगच्छत्विति सौहृदं स्मरन् ।
इति होक्तमिह श्रुतं मये ।
त्युपदेश्ये कियदाह तत्र सः ॥ १५ ॥

एवमेकदेशद्वारा कृष्णेन स्वस्य श्रवणकर्तृत्वोक्त्या तत्प्रतिपाद्यबहिर्भावोदर्शितः ॥ १५ ॥

---

१ अर्जुनस्य स्वोपास्यसंशयादि । २ सुहृद्भावम् । ३ यत्पूर्वं रथस्थाय तुभ्यमुक्तं मया तदेवार्थजातं केनचित्सिद्धपुरुषेण काश्यपायोपदिष्टं श्रुतम् । ४ कृष्णः ॥

अथ तत्रमननकर्तृत्वोक्त्यापि तद्दर्शयति तस्येति—

तस्य स्थिरीकरणमात्मनि सर्ववृत्तम् ।
स्वस्यैव बुद्धिमनसी द्विजदंपती च ।
कृत्वाऽनुयोजनतदुत्तरयोरनुक्त्वा ।
विख्याप्य तद्विवरणञ्च चकार शौरिः ॥१६॥

पूर्वेतिहासकल्पनया परिनिष्पन्नमर्थजातं मनसा सर्वमालोच्य इदमित्थमेवेति तस्य स्वबुद्धौ स्थिरी करणं पूर्वं स्वेन कृतं कयाचित्कल्पनाभङ्ग्या दर्शितवान्, साचेयं कल्पनाभङ्गी, यत्स्वकीयबुद्धिमनसी द्विजदम्पती कल्पयित्वा। ब्राह्मणी ब्राह्मणं कञ्चित् ज्ञानविज्ञानपारगम्। दृष्ट्वा विविक्त आसीनं भार्य्या भर्तारमब्रवीत्, इत्यादिना ब्राह्मण्याः प्रश्नमवतार्य्य तदुक्तिब्राह्मणोक्त्योः प्राचीनेतिहासार्थं सर्वं निवेश्य तदवधारणानन्तरं "यदिदं ब्रह्मणोलिङ्गं क्षेत्रज्ञ इति कीर्तितम् ॥ ग्रहीतुं येन तच्छक्यं लक्षणं तस्य तद्वद, इति श्लोकेन बंधमुक्तिफलभाजः शरीरातिरिक्तस्य क्षेत्रज्ञस्य ग्रहणोपायं वदेति ब्राह्मण्याः पुनः प्रश्नान्तरमवतार्य ब्राह्मणेनोक्तस्तदुपायोपि दर्शितः, तदनन्तरं "क्वनु सा ब्राह्म-

पूर्वोक्तं काश्यपसिद्धपुरुषसंवादश्रवणेन प्राप्तार्थतत्वस्य ।

२ प्रश्नप्रतिवचनयोः । ३ कृष्णः ॥

णी कृष्ण क्वचासौ ब्राह्मणर्षभः ॥ याभ्यां सिद्धिरियं प्राप्ता तावुभौ वदमेच्युत, इत्यर्जुनेन पृष्टस्य कृष्णस्योत्तरमुपवर्णितम् । मनोमे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम् ॥ क्षेत्रज्ञ इति यश्चोक्तः सोहमेव धनञ्जयेति ॥ १८ ॥

एवं भगवता कृष्णेन स्वस्य गीतोपदिष्टपरब्रह्मविषयश्रवणमननवत्वमुपाख्यानद्वयकल्पनेन प्रपञ्चितम् ॥ अथ तेन स्वस्य श्रुते मते च परब्रह्मणि मनो नियमनं तदुपयुक्तभक्तिस्थैर्यार्थं मनसा परब्रह्मभावलिङ्गभूतनिखिलतन्महिमावधारणं तस्य श्रुतिसिद्धब्रह्मलक्षणभूतजगत्कारणताशालित्वं स्वस्यापि तत्संसृष्टत्वं कर्मानुष्ठानसहितया तदुपासनया स्वस्य हृदयग्रन्थिविप्रमोक्ष इत्येतत्सर्वमर्जुनमवगमयितुं यत् गुरुशिष्यसंवादरूपमुपाख्यानान्तरं कल्पितं, यच्च तौ गुरुशिष्यौ अहं मम मनश्चेति पश्चात्तद्विवरणं कृतम्, तदर्थं संगृह्णाति अग्रे तत्वमिति ॥

अग्रेतत्वं परं किं त्वमहमपिकुतः सर्वभूतानि चेति प्रश्ने शिष्यस्य तस्मै गुरुकृतमखिलं ब्रह्मतत्वोपदेशं । मोक्षंशिष्यस्यचोक्त्वा पुनरपि विज-

१ शिष्यस्यार्जुनस्यप्रश्ने । २ शिष्यायार्जुनाय । ३ अर्जुनेन ॥

येनानुयुक्तोगुरुः कः शिष्योवेति स्वमेवेश्वर गुरुम वदत्स्वस्य चित्तं स्वशिष्यम् ॥ १७ ॥

एवं कृष्णाकल्पितोपाख्यानद्वयाभिप्रायं सर्वमवधारितवतोऽर्ज्जुनस्य । ब्रह्म यत्परमंवेद्यं तन्मे व्याख्यातुमर्हसि। भवतोहि प्रसादेन सुसूक्ष्मे रमते मतिः, इति प्रश्नानन्तरं परब्रह्मस्वरूपमुपदेष्टुकामेन कृष्णेन शिष्याचार्य संवादरूपः कश्चन कल्पितेतिहासः प्रवर्तितः ॥ कंचिद्ब्राह्मणमासीनमाचर्यं संशितव्रतम् । शिष्यः पप्रच्छ मेधावी किंस्वित्परतरं तव ॥ इत्युपक्रम्य कुतश्चाहं कुतश्चत्वं तत्सर्वं ब्रूहि यत्परम् । कुतो जातानि भूतानि स्थावराणि चराणि च। केन जीवन्ति भूतानि तेषां स्यात्कुत्र वा लयः। इत्यादिना शिष्यकृताः केचन प्रश्ना उपन्यस्ताः, तेषामुत्तरं वक्तुकामस्याचार्यस्य। ब्रह्मप्रोक्त मिदंधर्ममृषिप्रवरसेवितम् । वेदविद्यासमावाप्तं तत्त्वभूतार्थभावनम् ॥ भूतभव्यभविष्यादि धर्मकामार्थ निश्चयम् । सिद्धसंघपरिज्ञातं पुराकल्पं सनातनम् ॥ प्रवक्ष्यामि महाप्राज्ञ पदमुत्तममद्य ते। बुध्वा यदिहसन्दिग्धा भविष्यन्ति मनीषिणः ॥ इति तदुत्तरोक्ति प्रतिज्ञामुपन्यस्य तत्र श्रोतुरत्यादरसिद्धये महर्षीणां

चतुर्मुखस्यच संवादरूपमत्रविषये महदुपाख्यानमाचार्येणोपदिष्टमिति तदुपाख्यानमुखेन शिष्यप्रश्नविषयसकलार्थोपदेशः;तन्मध्ये यत्स्वस्य विष्णोश्च महिमवर्णनपरं देवर्षीन्प्रति ब्रह्मवचनम् ॥ सर्वेषामपि भूतानामहं ब्रह्ममयोमहान्। भूतं परतरं मत्तो विष्णोरपि न विद्यते ॥ राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयोमहान् । ईश्वरं तं विजानीमः सविभुः स प्रजापतिः ॥ देवदानवभूतानां पिशाचोरगरक्षसाम् । नरकिन्नरयक्षाणां सर्वेषामीश्वरः प्रभुः । आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयोमहान् । इति ॥ तेन कुतश्चाहं कुतश्च त्वमिति प्रश्नस्योत्तरं निर्गतम् ॥ ब्रह्ममय इति मयटा ऽभ्यस्तेन ब्रह्मकार्यत्वं विष्णोरुक्तं । सएव च भगवान् कृष्णः । न च तत्र मयटः स्वरूपार्थकत्वं युक्तम्, अधिकार्थाऽभावे वैयर्थ्यप्रसङ्गात्, चतुर्मुखे प्रयुक्तस्य ब्रह्ममयशब्दस्य ब्रह्मकार्यार्थतया तत्प्रायपाठविरोधापत्तेश्च । एवं ब्रह्मदेवर्षिसंवादरूपोपाख्यानोपन्यासानन्तरं गुरोः शिष्यंप्रति वचनं, "त्वमप्येवं महाभाग यथोक्तं ब्रह्मणो वचः। सम्यगाचर शुद्धात्मन् ततः सिद्धिमवाप्स्यसि । इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम् । चकार सर्वं कौन्तेय ततोमोक्षमवाप्तवान् । कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह । तत्पदं समनुप्राप्तो यत्र

गत्वा न शोचति, इति । तदनन्तरं "कोन्वसौ ब्राह्मणः कृष्ण कः स्विच्छिष्यो जनार्द्दन । श्रोतव्यं यन्मयैतद्वै तन्ममाचक्ष्व हेविभो । इत्यर्जुन प्रश्ने श्रीकृष्णवचनम्, "अहं गुरुर्महाबाहो मनःशिष्यंच विद्धि मे । त्वत्प्रीत्या गुह्यमेतच्च कथितं ते धनंजय । मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह । अध्यात्ममेत्तच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ॥ ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्कुरुनन्दन । सर्वकामविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम्, इति ॥ एतदर्थः सर्वोप्यत्र संगृहीतः ॥ १७ ॥

एवं पार्थं प्रागगृहीतं गीतार्थमिदानीन्तनविवरणानुसारेण गृह्णात्वित्यभिप्रेत्य कृष्णेनाऽनुगीतासु गीताशयविवरणं कृतमित्येतत्तत्कृतविवरणानुसारेण परिनिष्पन्नङ्गीतार्थं प्रदर्शयन्नाह ब्रह्मणीति—

ब्रह्मण्येवं स्वचेतोनियमनसमुपस्थायि तद्ग्र[1]न्थिमोक्षं स्वेनैवोक्तं[2] विमृश्य प्रपदनवचनं[3] तत्प्र[4]तीतार्थनिष्ठम् । यत्तत्सर्वस्यचाहं[5] हृदिमुखवचनं तत्पुनः शास्त्रदृष्ट्येत्येवं[6] पार्थोवगच्छेदिति विवृतिरकार्यत्रै[7] गीताशयस्य ॥ १८ ॥

---

१ हृदयग्रंथि भेदनम् । २ कृष्णेनैवोक्तं । ३ तमेवचाद्यं पुरुषं प्रपद्य इति वचनम् । ४ तस्मिन् श्लोके प्रतीयमानार्थनिष्ठम् । ५ सर्वस्य चाहं हृदि सन्निविष्टमित्यादि वचनम् । ६ अहंमनुरभवंसूर्यश्चेत्यादिवत् । ७ अनुगीतासु ॥

अनुगीतातावत् गीताशयविवरणार्थेति स्पष्टम्, तथैव तदुपक्रमात् । पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते। मया तव महाबाहो तस्मात्त्वमनः कुरु, इति। तदुपसंहाराच्च । तत्र च गुरुशिष्योपाख्यानव्याजेन स्वस्यपरब्रह्मप्रपदनादेव हृदयग्रन्थिविप्रमोक्षपूर्विका सिद्धिर्जातेति स्पष्टमेवोक्तम्, अतस्तदनुसारेण "तमेव चाद्यं पुरुषं प्रपद्य इत्येतदेव स्वार्थनिष्ठम्॥ कृष्णेन अहंभावेन यो ब्रह्मोपदेशः कृतः स सर्वोपि शास्त्रदृष्टया "प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वेति प्रतर्द्दनायेन्द्रकृतस्वात्मब्रह्मभावोपदेशवत् ब्रह्माहंभावभावनाप्रयुक्तः, नस्वात्मब्रह्मभावाशयप्रयुक्त इति। यद्यपितमेव चाद्यं पुरुषं प्रपद्य इत्येकं वचनमनुरुध्य श्रीकृष्णस्य ब्रह्माहंभाववचनानामन्यथानयनमयुक्तमिव, तथापि श्रीकृष्णेनैवाऽनुगीतासु प्रपञ्चेन कृतं गीताशयविवरणमनुरुध्य युक्तमेवेतिभावः ॥ १८ ॥ एवं गीताप्रपञ्चित बहुमहिमशालिनः कृष्णस्यापि समाश्रयणीयत्वेन तस्यां प्रतिपादितं यत् ब्रह्म तत्परम शिवएवेत्युपसंहरन् तत्र शङ्कास्पदं विरोधं परिहरति तच्चेति—

तच्च ब्रह्म प्रपत्यास्पदमसुररिपोरीश्वरत्वं न

१ त्रिपुरान्तकस्य ॥

चान्यो नाहं कञ्चित्प्रपद्ये विबुधमितिवचः श्रोतुरुत्कृष्टबुध्यै । सेवन्ते नीलकण्ठं परिमितफलदं न प्रबुद्धा इतीदं ब्रह्मैक्यध्यातृविद्वद्विषयमितरथा नास्ति भूयोऽनुरोधः ॥ १९ ॥

तमेवचाद्यं पुरुषं प्रपद्य इत्यत्र प्रपदनीयपरब्रह्मपरस्य पुरुषशब्दस्य बिभर्त्यव्यय ईश्वरः, ईश्वरः सर्वभूतानामितीश्वरनाम्नोपस्थिते शिव एव प्रत्येतव्येतु । रुद्रं समाश्रिता देवा रुद्रोब्रह्माणमाश्रितः । ब्रह्मामामाश्रितोराजन्नाहङ्कञ्चिदुपाश्रये । इति युधिष्ठिरं प्रति कृष्णवचनेन तस्यसमाश्रयणीय एव नास्तीति प्रतिपन्नं मोक्षधर्मे, "ब्रह्माणं नीलकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितंफलम्, इति फलसामान्यतः शिवस्य प्रतिबुद्धसेव्यत्वं निवारितम् ॥ कथं कृष्णेन शिवस्य समाश्रयणीयत्वमुच्यते, इत्यत्रेदमुत्तरम्, "नाहं कञ्चिदुपाश्रय इति कृष्णवचनं प्रागेव स्वभक्तं वैष्णवैरनुष्ठेयान् वैष्णवधर्मान् पृष्टवन्तं युधिष्ठिरं प्रति तद्धर्मनिरूपणार्थमेव

२ युधिष्ठिरस्य स्वस्मिन्भक्त्यतिशयाभिवृध्यै । ३ परिच्छिन्न फलदं । ४ वचः । ५ अन्यथा । ६ अनुगीतागतबहुवचनसमन्वयो नास्ति नभवेदित्यर्थः ॥

प्रवर्तितस्य वैष्णवधर्मशास्त्रस्याऽवसाने खलु, इदं श्रूयते, अतो "न बुद्धिभेदं जनयेदिति न्यायेन स्वस्मिन्युधिष्ठिरस्य प्राक् सिद्धभक्तेरभिवृद्धये तत्प्ररोचनार्थं "नाहं कञ्चिदुपाश्रय इति वचनं। ब्रह्माणं नीलकण्ठंचेत्यादि वचनन्तु, अहंब्रह्मोपासनानिष्ठविद्वद्विषयम् । प्रतिमास्वल्पबुद्धीनामित्यादिवचनैकार्थ्यात्, शेषत्वानुसन्धानगर्भायाः सेवाया ऐक्यानुसन्धान विरोधित्वाच्च। एवमर्थकत्वएवानयोर्वचनयोर्भूयोवचनाऽनुरोधो भवति । भूयोनुग्रहएव च न्याय्यः ॥ भूयांसि खल्वनुगीतावचनानि "तमेवचाद्यं पुरुषं प्रपद्ये, इत्यस्य प्रतीतार्थपरत्वव्यवस्थापकानि । भूयांसि च भारतपर्वसु हरिवंशे च विष्णोः शिवाराधकत्वप्रतिपादकानि । ननु कर्णपर्वणि, "विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यां संस्पर्शं सविशेषो महेशितुः, इति त्रिपुरविजयोपाख्यानगतवचनेन। यस्त्वान्द्वेष्टि स मान्द्वेष्टि यस्त्वामनु स मामनु। आवयोरन्तरन्नास्ति शब्दैरर्थैर्जगत्पते। नामानि तव गोविन्द यानिलोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा, इति हरिवंशे कृष्णं प्रति शिववचनेन, अन्यैश्चैवंभूतवचनैः परब्रह्मभूतशिवाभिन्नतया नित्यावाप्तसमस्तकाम इति त्वयाप्येष्टव्यम् । तथा च

कथमस्य, "भक्तं हि मां भजमानं भजस्व, तमेवचाद्यं पुरुषं प्रपद्ये, इत्यादिवचनमनुसृत्याऽभ्युदयनिःश्रेयसार्थं शिवप्रपदनमुच्यत इतिचेत्, सत्यम्, तथापि, अन्येषामभ्युदयनिःश्रेयसार्थं प्रपदनं स्वस्यापि मूलमूर्तिः शिव इति तन्महिमातिशयप्रख्यापनार्थं च लोकानुजिघृक्षोः सकलधर्मप्रवर्तकस्य विष्णोः शिवप्रपदनमेष्टव्यमेव। तथैव हि मोक्षधर्मे कौर्मे च श्रीकृष्णवचनम्, "मया प्रमाणं हि कृतं लोकस्तदनुवर्तते । नहि देवोऽस्ति कश्चिन्मे परः पाण्डवनन्दन। इति सञ्चिन्त्य मनसा पुराहं विश्वमीश्वरम् ॥ पुत्रार्थमाराधितवानहमात्मानमात्मना, इति । नैव पश्यन्ति तन्देवं मोहिता मम मायया । ततोहं स्वात्मनो मूलं ज्ञापयन्पूजयामितम्, इति च। तस्मात् "नाहं कञ्चिदुपाश्रय इत्यस्य उक्ताभिप्राय एवाऽन्वेष्टव्यः । तथा आश्वमेधिके पर्वणि वैष्णवधर्मानेव पृष्टवन्तं युधिष्टिरं प्रति तानेवोपदेष्टुं प्रवर्तिते वैष्णवधर्मशास्त्रे "कथं वैखानसा ब्रूयुः कथं वै पाञ्चरात्रिका इत्यादिना केवलवैष्णव धर्मानेव पुनः पुनः पृच्छ्यमानेनापि तस्यशिवस्य चाराधनं तुल्यविकल्पतया तुल्यफलतयैव च दर्शितम् ॥ यथा, "निवेशयति मन्मूर्त्या आत्मानं मां नरः शुचिः । रुद्रं दक्षिणमूर्त्या वा चतुर्दश्यां विशेषतः। सिद्धैर्ब्रह्म-

र्षिभिश्चैव देवलोकैस्तु पूजितः । गन्धर्वैर्भूतसंघैश्च गीयमानोमहातपाः । प्रविशेत्समहातेजा मां वा शङ्करमेव वा । नस्यात्पुनर्भवोराजन्नात्र कार्या विचारणा । विषुवे स्नपनं यस्तु मम कुर्याद्धरस्य वा । अर्चनञ्च यथान्यायं तस्य पुण्यफलं शृणु । दशजन्मकृतं पापं तस्य सद्योविनश्यति । दशानामश्वमेधानामिष्टानां लभतेफलम् । विमानन्दिव्यमारूढः कामरूपीयथासुखं । दिव्यवर्षसहस्राणां कोटिमेकां प्रमोदते । ततश्चापि च्युतःकालादिहलोके द्विजोत्तमः ॥ चतुर्णामपि वेदानां पारगोब्रह्मविद्भवेत् । चन्द्रसूर्यग्रहे धाम्नि मम वा शङ्करस्यवा । गायत्रीं मामिकां वापि जपेद्यःशङ्करस्यवा । शङ्खतूर्यनिनादैश्च कांस्यघण्टास्वनैरपि । कारयेत्तु ध्वनिंभक्त्या तस्य पुण्यफलं शृणु । सगच्छेद्दक्षिणामूर्तिं मां वा नात्रविचारणा, इति, एवं स्वभक्तं युधिष्ठिरं प्रति स्वभजनशिवभजनयोः साम्यमुक्त्वापि वस्तुवृत्तमनुरुध्य शिवभजनस्याधिक्यंसूचितं,तत्र हि"विशेषतीर्थं सर्वेषामशक्तानामनुग्रहात् । भक्तानान्तारणार्थं वै वक्तुमर्हसिधर्मतः, इति । भगवत्सेवां कर्तुमशक्तानां भक्तानांतदनुकल्पतया सेवनीयं तीर्थं किमिति प्रश्ने तस्य प्रतिवचने । सत्यस्य वचनं तीर्थमहिंसातीर्थमुच्यते । तपस्तीर्थं दयातीर्थं शीलं तीर्थं युधिष्ठिर । मद्भक्तःसतत-

न्तीर्थं शङ्करस्य विशेषतः, इति, स्वभक्तापेक्षयापि शिवभक्तस्यविष्णुभक्तान्प्रत्यधिकतीर्थत्वमुक्तम् । आरण्यपर्वणि च तीर्थयात्राविधौ केषुचिच्छिवक्षेत्रेषु शिवार्चनस्य, "गाणापत्यमवाप्नुयादिति महाभ्युदयहेतुत्वमुक्तम्, केषुचित्तदर्चनस्य "परमांगतिमाप्नुयादिति निःश्रेयसहेतुत्वमुक्तम् ॥ एवं विध भूयोवचनानुग्रहात् "ब्रह्माणं नीलकंठं चेति वचनस्याप्युक्त एवाभिप्रायोन्वेष्टव्यः ॥ तस्य नारायणातिरिक्तदेवताभजनं परिमितफलमितिज्ञातारस्तान्नसेवन्त इत्यर्थकत्वेपि नारायणसेवाप्ररोचनार्थं तदिति नेतव्यं, भूयोवचनानुरोधमनादृत्य यथाश्रुतार्थग्रहणे च । गोप्रतारं ततोगच्छेत्सरय्वास्तीर्थमुत्तमम् । यत्र रामोगतःस्वर्गं सभृत्यबलवाहनः ॥ देहन्त्यक्त्वा दिवं यातः स्थास्यतीन्द्रस्य वैभवादिति । गोप्रतारतीर्थमहिम्ना श्रीरामचन्द्रस्य स्वर्गप्राप्तिवचनात् । सभापर्वणि यमसभावर्णने । तस्यां राजर्षयःपुण्यास्तथा देवर्षयोऽमराः ॥ यमं वैवस्वतं तात प्रहृष्टाः पर्युपासते । ययातिर्नहुषःपूरुर्मान्धाता सोमकोनृगः, इत्यारभ्य स्वर्गप्राप्त्यनन्तरं यमसभायामवस्थाय तमुपासीनानां राजर्षीणां परिगणने "रामोदाशरथिश्चैव लक्ष्मणश्च प्रतर्द्दनः, इति परिगणनेन च सोपि कर्माधीनलोकप्राप्तिको जीवविशेषः स्यात्, "ततःशार्ङ्गंधनुःश्रेष्ठं करा-

ग्रात्प्रापतन्मम । मोहोत्पन्नस्तु कौन्तेय रथोपस्थउपा
विशम्, इत्यारण्यपर्वणि साल्वयुद्धे श्रीकृष्णस्य मो-
हाऽज्ञानवचनेनापि जीवविशेषः स्यात् ॥ तस्मात्कृत्स्न-
मपि भारतं गीताऽनुगीतामोक्षधर्मवैष्णवधर्मशास्त्रस-
हितं विशेषध्वनिवृत्त्या शिवपारम्यविश्रान्तं, तत्प्रधा
नमेव भगवता श्रीवेदव्यासेन कृतमित्येतत्सुप्रतिष्ठित
मिति सर्वं समञ्जसम् ॥ १९ ॥

अथकृतस्यस्तोत्रस्य प्रचयगमनार्थं "मङ्गलादनी-
त्याप्तवाक्यप्रामाण्यात् स्तोत्रसमाप्तौ शिवपारम्यो-
पदेष्टृगुरुनमस्काररूपं मङ्गलमाचरति इत्थमिति ॥

इत्थं[1] चक्रे भारतं यः प्रबन्धं
व्यक्त्या[2] व्यासः शाम्भवोत्कर्षवर्षि[3] ॥
ध्वन्यध्वन्यध्वन्यमूर्द्धन्यधन्यः ।
तं शौरिं तत्साक्षिणञ्चानतोस्मि[4] ॥ २० ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्या-
चार्यश्रीविश्वजिद्याजि श्रीरङ्गराजाध्वरिवरसूनो
रप्पयदीक्षितस्य कृतिः, भारतसारसङ्ग्रह
स्तोत्रविवरणं सम्पूर्णम् ॥

१ एवं प्रकारेण । २ व्यंजनया वृत्या । ३ परशिवस्य परब्रह्मत्व प्रबोधकम् । ४ तस्य कृष्णस्य साक्षिणं सदाशिवमूर्त्तिम् ॥

श्रीप्रतापेन्द्रसिंहाख्याज्जम्बूकाश्मीरयोः प्रभोः।
महाराजाल्लब्धवृत्तिस्तस्य जंबूपुरे वसन् ॥१॥
श्रीब्रह्मानन्दतीर्थाख्य द्रविडस्वामिनांमुदे ॥
इमङ्गङ्गाधरोलेखीत्तैलङ्गाक्षरपुस्तकात् ॥ २ ॥
चन्द्रवाणांकविधुभि (१९५१) र्मितेविक्रमवत्सरे ॥
आषाढशुक्के पूर्णायां तिथौ श्रीराममन्दिरे ॥३॥
यस्यगोकुलचन्द्राख्यस्तातोविद्वन्नृपार्च्चितः ॥
श्रुतिव्याकृतिगोऽभ्यासोभ्रातातुजगदीश्वरः।४।

---

निग्रहाष्टके तृतीयश्लोके प्रथमपादे साहसक्तमिति पाठस्य सहसक्तमिति प्रमादादशुद्धतया मुद्रण मभूदित्ति ज्ञेयम् ॥

पृ० ७९ पं० १८ अशुद्धः प्रष्ने, शुद्धः प्रश्ने, इति च ॥

—:०:—

अथ मुखविलासः

MANAGER,
INDIAN PRESS.
*Allahabad.*

मानेजर
"इण्डियन् प्रेस"
कटरा, इलाहाबाद ॥